# गार्ग्यनारायणाख्यवृत्तिसवलितं

आश्वलायनीयम्

# गृह्यसूत्रम्

तथा

# गृह्यपरिशिष्टम्

भट्टकुमारिलस्वामिविरचिता सूत्रानुसारिण्य·

# गृह्यकारिकाश्च

एतद्ग्रन्थत्रय

पणशीकरोपनामकेन वासुदेवशर्मणा

शोधितम्

---

तच्च

पण्डित ज्येष्ठाराम मुकुन्दजीशर्मणा

मुम्बय्यां

जावजी दादाजी इत्येतेषा निर्णयसागराख्यमुद्रायन्त्रे

मुद्रयित्वा प्रसिद्धि नीतम् ।

---

शक १८१५—सवत् १९५०—सन १८९४

# प्रस्तावना ।

ऋक्शाखाध्यायिने विप्रे तपोज्ञानक्रियान्विते ।
दातव्य हितकामाय इति वेदविदो विदु ॥

*विदितमस्त्वेतत्तत्रभवतामनवद्यविद्याद्यखिलगुणवता* यन्निखिल-नित्यनैमित्तिककर्मणामशेषजनसघातनियताचरणीयत्वेनोपदिष्टषोडशसस्काराणामाधारभूतप्रयोगरत्नादिविस्तृमरनिबन्धजातजीवातुभूतमाश्वलायनीय गृह्यसूत्र नाम जगति वरीवर्ति । यच्चाश्वलायनशाखा( ऋक्शाखा )ध्येतारो वैदिका दशग्रन्थान्त पातित्वादनवरत पठन्ति । यस्मिश्चानुपूर्व्या गृह्यकर्माण्याह्निकादीनि सर्वे सस्कारा पाकयज्ञादारभ्य पूर्ताद्य त्यक्र्मा त च सौत्रश्रुतिमन्त्रगर्भ निबद्धानि सन्ति । एतच्च सर्वेषा साहायकमेवगुणविशिष्टमपीद प्रायो दुरवबोधमेवेति प्रयोगकुशला अपि खिन्ना प्रतिकर्मास्यार्थजिज्ञासवोऽनवरत सदिग्धस्थले राद्धान्तयितु सशेरते क्लिश्यन्ति च । ईदृगापन्निरसनपूर्वकमस्यार्थावगत्यै कलिकातामुद्रितपुस्तकवत्खण्डीकृतगार्ग्यनारायणीयवृत्तिसहितमिद सम्यक्शुद्ध विधाय शोधनसमये च प्राचीनहस्तलिखितानि द्वित्राणि केवलमूलगृह्यसूत्रपुस्तकानि सपाद्य तद्योजनेनापि यथावत्सशोध्य तदवसाने गृह्यसूत्रपतितविप्रयाणा पूरण प्रयोगाणामतीव साहायक गृह्यपरिशिष्ट नामान्यद्यथाविभाग सयोज्य तदन्ते चातीव दुर्लभा आश्वलायनगृह्यकारिका ( *गृह्यसूत्रार्थगर्भिता* श्लोका अनुमानतो नवशत ) महतायासेन सपाद्य तास्वपि प्रकरणच्छेदादिकृत्वा क्वचित्स्थलविशेषे टिप्पण्यादिनालकृत्य त्रुटितस्थले प्रासङ्गिका अन्या कारिका अपि मध्ये सनिवेशिता सन्ति। एतासामालम्बनेन कचन तत्रतत्रानवबुद्धगृह्यसूत्रस्थलेऽर्थवैशद्य स्यात् । आशास्यते च समानाधिकरणमेतद्ग्रन्थत्रयमेकस्मिन्पुस्तके सकलितमतोऽन्योन्याश्रयेणाखिलविदुषा शेमुषीमनायासेनेदमारोहणक्षम स्यादिति

अस्य शोधनसमये "पथा गच्छ स्खलेत्कचित्" इति दृग्दोषादिना यदत्र कचित्स्खलितं चक्षुर्विषयं स्यात्तर्हि तत्रभवतो निसर्गदयालव सहृदयहृदया विद्वांस कणफलीकरणवद्दोषापाकरणेनादरेयुरिति नामनाममम्यर्थ्यते ।

भवदीय पणशीकरोपाह्वलक्ष्मणसूनु
**वासुदेवशर्मा ।**

---

## गृह्यसूत्रशोधने आदर्शपुस्तकानि ।

| | | |
|---|---|---|
| १ | पण्डित ज्येष्ठाराम मुकुन्दजीशर्मणा शक १७३९ कालीन सवृत्तिक शुद्ध सपूर्णम् । | |
| २ | ,, | तेषामेव शुद्धतर सवत् १९२३ कालीन मूलमात्रमारम्भे त्रुटितम् । |
| ३ | ,, | शालिवाहन शक १७०० कालीन मूल सपूर्णम् । |
| ४ | ,, | कलिकातामुद्रित सवृत्तिक सपरिशिष्ट च सपूर्णमेव । |
| ५ | अस्मदीयमेक शालिवाहन शक १७१३ कालीन मूलमात्र साग्रम् । | |

# आश्वलायनीयगृह्यसूत्राणा सूचीपत्रम् ।

## प्रथमाध्याये कण्डिका. १–२४

## द्वितीयाध्याये काण्डका. १—१०

## तृतीयाध्याये कण्डिका १–१२

षष्ठी कण्डिका ।



सप्तमी कण्डिका ।



अष्टमी कण्डिका ।

## चतुर्थाध्याये कण्डिका १–९

समाप्तेयमाश्वलायनगृह्यसूत्राणामनुक्रमणी ।

---

# गृह्यपरिशिष्टविषयानुक्रमः।

## प्रथमोऽध्याय



## द्वितीयोऽध्याय ।

## तृतीयोऽध्याय ।

## चतुर्थोऽध्याय ।



समाप्तेयं गृह्यपरिशिष्टविषयानुक्रमणी ।

---

# आश्वलायनगृह्यकारिकाविषयानुक्रम ।

## प्रथमोऽध्याय ।



## द्वितीयोऽध्याय ।

## तृतीयोऽध्यायः ।

## चतुर्थोऽध्याय. ।



समाप्ता चेयमाश्वलायनगृह्यकारिकानुक्रमणी ।

ॐ

श्रीमदाश्वलायनीय

# गृह्यसूत्रम् ।

## गार्ग्यनारायणीयवृत्तिसहितम् ।

प्रथमोऽध्याय १

आश्वलायनमाचार्यं प्रणिपत्य जगद्गुरुम् ।
देवस्वामिप्रसादेन क्रियते वृत्तिरीदृशी ॥

**उक्तानि वैतानिकानि गृह्याणि वक्ष्याम ॥ १ ॥**

वैतानिकान्युक्तानि । अत. पर गृह्याणि वक्ष्यामः । वितानोऽग्नीना विस्तार. । तत्र भवानि वैतानिकानि । बह्वग्निसाध्यानि कर्माणीत्यर्थ । गृहनिमित्तोऽग्निर्गृह्य. । तत्र भवानि कर्माण्यपि लक्षणया गृह्याणीत्युच्यन्ते । गृहशब्दो भार्याया शालायां च वर्तते । तथा 'सगृहो गृहमागत.' इत्यत्र हि पूर्वो गृहशब्दो भार्यावचन. । उत्तरस्तु शालावचन. । येषां भार्यासयोगादुत्पन्नाग्नौ इमानि कर्माणि प्रवर्तन्ते तेषामय गृहशब्दो भार्यावचनः । येषा तु दायविभागकालेऽग्निरुत्पद्यते तेषा शालावचन. । 'भार्यादिरग्निर्दायादिर्वा तस्मिन् गृह्याणि' इति गौतम । उक्तानुकीर्तन सबन्धकरणार्थम् । सबन्धकरणे प्रयोजन कथ सौम्यः परिभाषा. प्राप्नुयुरिति । कथ वा न प्रा

प्रयुः शास्त्रान्तरत्वात् । कथ शास्त्रान्तरत्वम् । सूत्रसमाप्तावा चार्यनमस्कारात् । शास्त्रान्तर एवाचार्यनमस्कार उपपद्यते । इद प्रतिज्ञासूत्रम् ॥ १ ॥

## त्रय पाकयज्ञा· ॥ २ ॥

पाकयज्ञास्त्रय'। त्रिविधा इत्यर्थ·। कुत·। हुता' प्रहुता ब्रह्म णिहुता इत्येकैकस्मिन्बहुवचननिर्देशात् । यदि हि त्रिविधत्व न स्यात् एकवचनेन निर्देश कुर्यात् । तस्मात्त्रिविधत्वमिति । पाकयज्ञा अल्पयज्ञा· प्रशस्तयज्ञा वा । दृष्टश्चोभयत्र पाक शब्दः । 'योऽस्मत्पाकतर ' इत्यत्राल्पत्वे पाकशब्द· । 'तं पाकेन मनसाऽपश्यम्' इति 'यो मा पाकेन मनसा' इति च प्रशसायाम् । तेन आज्यहोमेष्वपि पाकयज्ञतन्त्र सिद्ध भव ति । यदि हि पाकशब्द पक्तौ वर्तेत आज्यहोमेषु तन्त्र न स्यात् । इष्यते च । तस्मान्न तत्र वर्तते । प्रशस्तयज्ञा इत्युक्तम् । कथ प्रशस्तत्वम् । उच्यते । यस्मादेतेषु सस्कारा उच्यन्ते । तैश्च ब्राह्मण्यमवाप्यते । के पुनस्ते सस्काराः । गर्भाधानादय· । तस्मात्सर्वेषा पाकयज्ञत्वमिति यदुक्त तत्सम्यक् ॥ २ ॥

कथ त्रिविधत्वमित्यत आह—

## हुता अग्नौ हूयमाना अनग्नौ प्रहुता ब्राह्मणभाजने ब्रह्मणिहुता· ॥ ३ ॥

अग्नौ हूयमाना· 'हविष्यस्य जुहुयात्' [गृ० १ । २ । १ ] इत्येवमादयो हुता । अनग्नौ क्रियमाणाः 'अथ बलिहरणम्' [गृ० १ । २ । ३ ] इत्येवमादयः प्रहुता· । ब्राह्मणभोजन यत्रास्ति ब्राह्मणान्भोजयित्वेति ते ब्रह्मणिहुता' । अग्नाविति व चनमनग्नौ हूयमानस्य सर्पबले· प्रहुतत्वार्थम् । सोऽपि हि जु होतिशब्देनचोदित' । हुतादिसज्ञाविधान कृत्स्नोपदेशार्थम् ।

शब्दतश्चार्थतश्च मृगतीर्थसञ्ज्ञावत्। अथवा त्रैवि"योपदेशार्थम्। पाकयज्ञानामेतत्तन्त्रमिति वक्ष्यति। अत्र त्रैवि"योपदेशे सति तत्पाकयज्ञग्रहणमपार्थकम्। तत्समानजातीयानामेव हुताना पा कयज्ञाना तन्त्र यथा स्यादित्येवमर्थ त्रैवि"योपदेश॰। प्रहुत ब्रह्मणिहुतानां माभूत्तन्त्रमिति। तेन सर्पवल्यादावबदानधर्मो निवृत्तः, ब्राह्मणभोजने च निर्वापादि निवृत्तम्॥ ३॥

अथाप्यृच उदाहरन्ति य समिधा य आहुती यो वेदेनेति॥ ४॥

अधिकपादग्रहणमृचोऽधिकस्य त्र्यृचस्य ग्रहणार्थ न तृच स्य। तृतीयस्यामप्यर्थविरोधात्। बहुवचन तु 'अगोरुधाय' 'आ ते अग्ने' 'यः समिधेति' त्र्यृचावभिप्रेत्योपपन्नम्। ऋचामुदाहरण कथम्। एतान्यपि कर्माणि नित्यानि श्रौतैस्तुल्यान्याहिताग्नेरपि स्युरित्येवमर्थम्॥ ४॥

समिधमेवापि श्रद्दधान आदधन्मन्येत यज इदमिति नमस्तस्मै य आहुत्या यो वेदेनेति विद्यैवाप्यस्ति प्रीतिस्तदेतत्पश्यन्नृषिरुवाच। अगोरुधाय गविषे द्युक्षा यदस्य वच। घृतात्स्वादीयो मधुनश्च वोचतेति। वच एव म इद घृताच्च मधुनश्च स्वादीयोऽस्ति प्रीति॰ स्वादीयोऽस्त्वित्येव तदाह। आ ते अग्न ऋचा हविर्हृदा तष्ट भरामसि। ते ते भवन्तूक्षण ऋषभासो वशा उतेति। एत एव म उक्षाणश्च ऋषभाश्च वशाश्च भवन्ति। य इम स्वाध्यायमधीयत इति यो नमसा स्वध्वर इति नमस्कारेण वै

खल्वपि न वै देवा नमस्कारमति यज्ञो वै नम
इति हि ब्राह्मण भवति ॥ ५ ॥ ॥ १ ॥

समिधमेवापि श्रद्दधान आदधन्मन्येत इत्यारभ्य यज्ञो नम इत्यन्त ब्राह्मण भवति । तत्र समिधेत्यस्य तात्पर्यकथ ब्राह्मणम् । समिधमेवापीति । समिधमेवापि श्रद्दधान आद धयज इद दैवतमिति मन्येतैव । कुत॰ । नमस्तस्मै । अत्र न म शब्देनान्नमुच्यते । निघण्टुषु नमःशब्दोऽन्ननामसु पठित समिदपि तस्मै दैवताय नमो भवति अन्न भवति । प्रीतिहेतु र्भवतीत्यर्थः । श्रद्दधान इत्यनेन श्रद्धायुक्तस्यैव पाकयज्ञेऽधि कार इति ज्ञाप्यते । य आहुतीत्यस्य विवरण ब्राह्मण आहुत्येति । तत्र 'सुपां सुलुक्' इत्यादिना तृतीयैकवचनस्य पूर्वसवर्णादेश । यो वेदेनेत्यस्य तात्पर्यकथन ब्राह्मणम् । य वेदेनेति । विद्ययैवेत्यादि । विद्ययापि प्रीतिर्दैवतस्यास्त्येवेत्य र्थ । द्रव्यत्यागाभावेऽपि वेदस्याध्ययनमात्रेणापि प्रीतिरस्ती त्यभिप्राय॰ । विद्यया प्रीतिरस्तीत्येतद्द्रढयितु तस्मिन्नर्थे मन्त्रा न्तरत्व साक्षित्वेन श्रुतिर्दर्शयति— तदेतदित्यादि । तदेतदर्थ रूप पश्यन् ऋषिर्मन्त्रद्रष्टा उवाच । अगोरुधायेत्यादि । अ स्मिन्मन्त्रे स्तोतार॰ प्रत्यक्षीकृता॰ । एवभूतायेन्द्राय हे सखा यो वचो वोचत । घृतात्स्वादीयो मधुनश्चेति कृत्वेति । व॰ एवेत्यनेन तु तात्पर्यकथनपरेण ब्राह्मणेन देवताः प्रत्यक्षीकृता स्तूयन्ते । हे इन्द्र इद मे मम वच एव घृताच्च मधुनश्च स्वादी यः। असिद्धत्वात्स्वादीयस्त्वस्य प्रार्थनेयमिति दर्शयति—स्वा दीयोऽस्त्वित्यादिना । स्वादीयोऽस्त्वित्यैवासौ साक्षित्वेन ऋ षिराहेत्यर्थः । अतोऽस्ति प्रीतिः । एवमध्ययनं रसात्स्वादुत रमित्युक्तम् । मांसादपि स्वादुतरमिति मन्त्रान्तरं दर्शयति—

आ ते अग्न इत्यादि । अस्य मन्त्रस्य तात्पर्यकथनं ब्राह्मणम् । एत एवेत्यादि । हे अग्ने एत एव मे मत्सबन्धिन॰ । अत एव ते तव उक्षाणश्च ऋषभाश्च वशाश्च भवन्ति । भवन्त्वित्यर्थः । भवन्तीति लिङर्थे लेट् । विकरणसिप्रत्ययाडागमेकारलोपास्तु व्यवस्थितविकल्पत्वान्न भवन्ति । के मत्सबन्धिन इति चेत् । य इमं स्वाध्यायमधीयत इति । अस्य मन्त्रस्य तात्पर्यं उक्षादिमांसेन तव यावती प्रीतिस्तावती तव विद्ययापि भवत्वित्यर्थः । उत्तरार्धर्चतात्पर्यकथनं ब्राह्मणम् । यो नमसा स्वध्वर इति नमस्कारेणेत्यादि । नमस्कारेणापि योऽग्निमर्चयति सोऽपि स्वध्वर॰ शोभनयज्ञ. । 'तस्येदर्वन्तो रंहयन्त:' इत्यादि पाकयज्ञानामर्थवादः । नमस्कारेणापि खलु प्रीतिरस्ति । कुत॰ । न वै देवा नमस्कारमति । अतिरतिक्रमणे । देवा हि नमस्कारं नातिक्रामन्ति । तमप्याद्रियन्त इत्यर्थः । किमिति नातिक्रामन्ति । यज्ञो वै नमः । नमस्कारोऽपि यज्ञ इत्यर्थः । इति हि ब्राह्मणं भवति । इतिशब्दो निर्दिष्टपरामर्शी । समिधमेवेत्यादि एवमन्तं ब्राह्मणं भवतीत्यर्थ॰ ॥ ९ ॥ इति प्रथमे प्रथमा कण्डिका ॥ १ ॥

## अथ सायंप्रातः सिद्धस्य हविष्यस्य जुहुयात् ॥१॥

अथशब्दो विशेषप्रक्रियार्थः । अथ गृह्याण्युच्यन्त इति । अत्र सायंप्रातःशब्दौ लक्षणया अहोरात्रवचनौ । कुत एतत् । स्मृतिदर्शनात् । 'सायंप्रातरशनान्यभिपूजयेत्' इति । अशनं च मध्याह्ने विहितं । 'पूर्वाह्णे देवानां मध्यन्दिने मनुष्याणामपराह्णे पितॄणाम्' इति । वैश्वदेवानन्तरमातिथ्यादेर्विधानाच्च । सिद्धं पक्वम् । सिद्धस्येति दध्न॰ पयसश्च माभूत् । हविष्यस्येति चणककोद्रवादीनां माभूत् । कथमहविष्यस्य प्राप्नुयात् । अन्नसंस्कारत्वात् । उभयमपि तर्हि नारभ्यम् । दर्शनादेव सिद्धस्य

हविष्यस्य च भविष्यति । यथा चतुरश्चतुरो मुष्टीन्निर्वपतीत्यु क्ते हविष्यमेव प्रतीयते । सिद्ध च तद्भवति । अनारभ्यमाणे दोप' । अनादिष्टद्रव्यत्वादाज्य प्रसज्येत । आज्यशेषेण वा ऽनक्ति हृदये इति ध्रुवञ्ज्ञापयति यत्र द्रव्य नादिश्यते तत्राज्येन होम इति । तस्मात्तन्निवृत्त्यर्थं सिद्धग्रहणमारभ्यम् । तर्हि हवि ष्यग्रहणमपार्थकम् । नन्वन्नसंस्कारत्वादहविष्यस्यापि स्यात् । अ पूर्वार्थत्वाच्च न स्यात् । तर्हि तन्त्रनिवृत्त्यर्थं हविर्ग्रहणम् । कथ हविष्यस्य होम एव स्यान्न तन्त्रमिति । ननूत्तरत्र विधानाच्च तन्त्र प्राप्नोतीति च शङ्का न कार्या । तर्हि विवाहेऽपि तन्त्रनि वृत्तिप्रसङ्गात् । तत्र चेष्यते तन्त्रम् ॥ १ ॥

होममन्त्रानाह—

## अग्निहोत्रदेवताभ्य सोमायवनस्पतयेऽग्नीषो- माभ्यामिन्द्राग्निभ्यां द्यावापृथिवीभ्यां धन्वन्तरय इन्द्राय विश्वेभ्योदेवेभ्यो ब्रह्मणे ॥ २ ॥

अग्निहोत्रदेवताभ्य इति विधायको न मन्त्रः । तथाऽर्थम तीते' । अग्निहोत्रशब्दोऽय द्रव्ये कर्मणि च वर्तते । तत्राग्निहो- त्रदेवताभ्य इति किं द्रव्यदेवता गृह्यन्ते उत कर्मदेवता इति सशय' । का' पुनर्द्रव्यदेवता । 'रुद्राद्या रौद्रङ्गविसत्' इत्या द्याः श्रुतावुक्तास्ता न सभवन्ति । भक्तिमात्रत्वात् । तेन कर्म देवता गृह्यन्ते । एवचेदग्निर्गृहपतिरित्येवमाद्या अपि प्राप्नुवन्ती ति शङ्का न कार्या । तासामनित्यत्वात् । कास्तर्हि । अग्नि' सूर्यः प्रजापतिश्चोभयत्र । श्रुतौ चास्य सम्यगुपदेश' । 'तस्य वा एतस्याग्निहोत्रस्य' इत्यादि । सोमायवनस्पतय इत्येको मन्त्रः । वनस्पतेर्गुणत्वेन दृष्टत्वात् । 'अग्निर्गृहपति सोमो वनस्पतिः' इति । समाचारश्चैवमेव । इत्युक्तो देवयज्ञः ॥ २ ॥

## स्वाहेत्यथ बलिहरणम् ॥ ३ ॥

अप्रेषितयागत्वादेव स्वाहाकारे सिद्धे स्वाहाकारवचन ज्ञापनार्थम् । एतज्ज्ञाप्यते । अन्यत्र बलिहरणे स्वाहाकारो न भवतीति । तेन चैत्यबलौ नमस्कारो भवति । अथशब्द आनन्तर्यार्थ. । इतरथा कर्मान्तरत्वात्कालान्तरे वा बलिहरण स्यात् । ब्रह्मयज्ञस्त्वेषा पूर्वो वा स्यात् । उत्तरो वा । मनुष्ययज्ञस्तूत्तर एव । 'वैश्वदेव कृत्वाऽतिथिमाकाङ्क्षेत्' इति वचनात् ॥ ३ ॥

## एताभ्यश्चैव देवताभ्योऽद्भ्य ओषधिवनस्पतिभ्यो गृहाय गृहदेवताभ्यो वास्तुदेवताभ्य ॥ ४ ॥

एताभ्यः प्रागुक्ताभ्यो देवताभ्यश्चकाराद्वक्ष्यमाणदेवताभ्य श्च बलिहरण कार्यम् । एवकार पौनर्वाचिकः । भूमौ मासस्थां पाङ्क्ति करोति । ब्रह्मणे स्वाहेति हुत्वाऽन्तराल मुक्त्वाऽद्भ्य इत्यादिभिर्जुहोति । गृहदेवताभ्य इति मन्त्रो न विधायक' । तथा वास्तुदेवताभ्य इति च । यदिहि विधायक. स्यादुभयवचनमपार्थक स्यात् । गृहमेव हि वास्त्वित्युच्यते ॥ ४ ॥

## इन्द्रायेन्द्रपुरुषेभ्यो यमाय यमपुरुषेभ्यो वरुणाय वरुणपुरुषेभ्य सोमाय सोमपुरुषेभ्य इति प्रतिदिशम् ॥ ५ ॥

दिग्ग्रहणेन चतस्रो दिशो गृह्यन्ते । यत्रैव प्रधानदेवतास्तत्रैव पुरुषैर्भवितव्यमिति कृत्वा प्रधानानामुत्तरतः पुरुषेभ्यो बलि हरेत् ॥ ५ ॥

## ब्रह्मणे ब्रह्मपुरुषेभ्य इति मध्ये ॥ ६ ॥

दिग्देवताना मध्ये पूर्वोक्ते अन्तराले ॥ ६ ॥

विश्वेभ्यो देवेभ्य' ॥ ७ ॥

मध्य एव ॥ ७ ॥

सर्वेभ्यो भूतेभ्यो दिवाचारिभ्य इति दिवा॥८।

मध्य एव । दिवाग्रहण ज्ञापनार्थ क्रियते । तेन वैश्वदेवस्य प्रातरारम्भणं भवति । इतरथा सायमातरुपदेशात्सायमुपक्रम स्यादग्निहोत्रवत् । तच्चानिष्टम् । अतो दिवाग्रहणम् । तेनाग्नये स्वाहेति साय जुहुयादित्यत्र सायमुपक्रम' ॥ ८ ॥

नक्तचारिभ्य इति नक्तम् ॥ ९ ॥

दिवाचारिभ्य इत्यस्य स्थाने नक्तचारिभ्य इति नक्त भवति ॥ ९ ॥

रक्षोभ्य इत्युत्तरतः ॥ १० ॥

सर्वासामुत्तरतः ॥ १० ॥

स्वधा पितृभ्य इति प्राचीनावीती शेषं दक्षिणा निनयेत् ॥ ११ ॥ ॥ २ ॥

'यज्ञोपवीतशौचं च' [ श्रौ० १।१।१० ] इति यत्र प्राचीनावीतित्वं निवीतित्वं वाऽचार्येण न विहित तत्र यज्ञोपवीतित्व प्राप्तम् । अतः प्राचीनावीतित्व विधीयते । निनयेदिति वचन क्रियान्तरज्ञापनार्थम् । तेन बलिहरणमिद न भवति । किमेव सिध्यति स्वाहाकारो न भवति । ननु स्वधाकार' प्रदानार्थः स्वाहाकारश्च प्रदानार्थ इत्युभयोरेककार्यकारित्वेन समानजातीयत्वात्स्वधाकारस्तस्य बाधको भवति । नैतदेवम् । समानार्थयोः समुच्चयो दृश्यते । यथा 'सोमाय पितृमते स्वधानमः' इति स्वधानमस्कारयोः तद्वदत्राप्याशङ्का स्यात् । का पुनरियं क्रिया । पितृयज्ञः । एवं च कृत्वा पितृयज्ञार्थ

ब्राह्मणभोजनमन्वहं न कर्तव्यमिति सिद्धम् । शेषग्रहणमान न्तर्यार्थम् । असत्यस्मिन्क्रियान्तरत्वात्कालान्तरे वा स्यात् । एवमुक्तं वैश्वदेवं यस्मिन्कस्मिंश्चिदग्नौ वैश्वदेवं कार्यं न गृह्य ए वेति नियमः । कुतः । प्राङ्निधानाद्विवाहाग्नेः । यदि हि तत्रा- भिमेतमभविष्यत् तमेव पूर्वं ब्रूयात् । पाणिना च वैश्वदेवं कार्यं न पात्रान्तरेण शक्यत्वात् ॥ ११ ॥ इति प्रथमे द्वितीया क ण्डिका ॥ २ ॥

अथ खलु यत्र क्व च होष्यन्त्स्यादिषुमात्रावरं सर्वतः स्थण्डिलमुपलिप्योल्लिख्य षड्लेखा उदगाय- तां पश्चात्प्रागायते नानान्तयोस्तिस्रो मध्ये तद- भ्युक्ष्याग्निं प्रतिष्ठाप्यान्वाधाय परिसमुह्य परिस्तीर्य पुरस्ताद्दक्षिणतः पश्चादुत्तरत इत्युदक्संस्थं तूष्णीं पर्युक्षणम् ॥ १ ॥

अथशब्दोऽधिकारार्थः । इत उत्तरं यानि वक्ष्यन्ते तेषामे वायं होमविधिर्भवतीति । तेन वैश्वदेवं कचग्रहणेन प्राप्य माणो होष्यधर्मो न भवति । खलुशब्दोऽपार्थकः । मिताक्षरे ष्वनर्थक इति वचनात् । यत्र क्वचग्रहणमहरहः क्रियान्तरवि- ध्याशङ्कानिवृत्त्यर्थम् । यत्र क्व च होष्यन्त्स्यादिति होममनूद्य धर्मविधिः । तर्हि यत्रेत्येवास्तु क्वचग्रहणमनर्थकम् । न । तन्त्रप्रतिषे धविषयेऽप्यौपासनाग्निपरिचरणे एतत्सूत्रविहितपरिसमूहनप रिस्तरणपर्युक्षणानां प्राप्त्यर्थं क्वचग्रहणम् । लेखादयो न सन्ती ति वक्ष्यामः । इषुमात्रा मात्रा यस्य स्थण्डिलस्य तदिषुमात्र म् । एकस्य मात्राशब्दस्य लोपः । उष्ट्रमुखवत् । तच्च तदवरं च इषुमात्रावरम् । अवरं निकृष्टमित्यर्थः । सर्वतः सर्वासु दिक्षु । चतसृष्वित्यर्थः । चतसृष्वपि दिक्षु इषुमात्रप्रमाणं ततोऽधिकं

वा चतुरस्र स्थण्डिल गोमयेनोपलिप्य षद् लेखा उल्लिखेत्। षड्ग्रहण कथम्। षट्स्वपि लेखासु अग्नेः स्थापन यथा स्यादिति। केनचिद्यज्ञियेन शकलेन स्थण्डिलमध्ये उदग्दीर्घा प्रादेश मात्रां न्यूनां वा लेखामाग्निप्रतिष्ठापनदेशस्य पश्चाल्लिखेत्। नानेत्यससर्गार्थम्। तस्या अन्तयोर्नाना अससृष्टे प्रागायते लेखे लिखेत्। ततस्तिस्रो मध्ये असस्पृष्टा प्रागायता लेखा लिखेत्। शकल तत्रैव निधाय। स्थण्डिलमभ्युक्ष्य शकल निरस्याप उपस्पृश्याभ्यात्ममग्नि प्रतिष्ठाप्यान्वादधाति। ततोऽतिदेशप्राप्त बर्हिष इध्मस्य च सन्नहन करोति। अन्वाधान नाम कर्माङ्गत्वेन द्वयोस्तिसृणां समिधामभ्याधानम्। तत परिसमूह्य। परिसमूहन नामाऽग्ने समन्तात्परिमार्जनम्। तच्चाग्निहोत्रवत्। तत परिस्तीर्य। पुरस्ताद्दक्षिणतः पश्चादुत्तरत इत्येवम्। उदक्संस्थवचन एकैकस्यां दिश्युदक्संस्थतामास्यर्थम्। अथवा इत्युदक्संस्थमिति पृथग्योगः। निपातानामनेकार्थत्वादितिशब्द एवमकारे। एवविध यत्कर्म सर्वेदिक्सबद्ध परिसमूहनपर्युक्षणशिरश्छिरुन्दनादिक तदपराजिताया दिश्यारभ्योदक्संस्थ कार्यमित्यर्थः। ततस्तूष्णीं पर्युक्षण करोति। तूष्णीग्रहण मन्त्रवर्जमन्ये धर्मा अग्निहोत्रदृष्टा भवन्तीत्येवमर्थम्। त्रिस्त्रिरेकैक पुन. पुनरुदकमादायादायान्ते च कर्मणा पर्युक्षणम्। उभयत्र च परिसमूहनपूर्वकत्वमित्यत्र पुन. परिसमूहनविधान मध्ये परिस्तरणसिद्ध्यर्थम्। एतस्मिन्काले उत्तरतोऽग्नेरपः प्रणयति चमसेन कांस्येन मृण्मयेन वा। उत्तरत्र निनयनदर्शनात् ॥ १ ॥

पवित्राभ्यामाज्यस्योत्पवनम् ॥ २ ॥

कार्यमिति शेष. ॥ २ ॥

अथ किंलक्षणे पवित्रे कथं वा उत्पवनं कार्यमित्येतद्द्वय निर्णेतुमाह—

**अप्रच्छिन्नाग्रावनन्तर्गर्भौ प्रादेशमात्रौ कुशौ नानान्तयोर्गृहीत्वाङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति प्रागुत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीम् ॥ ३ ॥**

प्रशब्दः सूक्ष्मच्छिन्नाग्रयोरनिवृत्त्यर्थः । न विद्यते अन्तर्मध्ये गर्भो ययोस्तौ तथोक्तौ । प्रादेशमात्रौ कुशौ । एवंलक्षणयुक्तौ कुशौ पवित्रसज्ञौ । नानेत्यसंसर्गार्थम् । पवित्रे अन्तयोरसस्पृष्टे अङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां गृहीत्वा प्रागुत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीम् । प्रागिति पाठः कार्यः । प्राडिति पुल्लिङ्गपाठे तु कर्तुः प्राङ्मुखत्वं स्यात् । तच्च परिभाषासिद्धम् । ननु कर्मणश्चापि प्राक्त्वं तत एव सिद्धम् । सत्यम् । तत्तु शास्त्रान्तरदृष्टं पुनराहारनिवृत्त्यर्थम् । तेन ज्ञायते शास्त्रान्तरदृष्टानामविरोधिना पात्रासादनादीनामिच्छातः क्रियेति । इत्थं हि शास्त्रान्तरे दृष्टम् । परिस्तरणकाले उत्तरतोऽग्नेः काश्चिद्दर्भानास्तीर्य ब्रह्मवत्सु कर्मसु दक्षिणतोऽग्नेरपि काश्चिद्दर्भानास्तीर्य ततोऽग्निं पर्युक्ष्य उदगग्रेर्दर्भेषु द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति उभाभ्यां पाणिभ्याम् । अथ पात्रासादनक्रमः— 'प्रोक्षणपात्रमथ स्रुवयुक्तं पात्रमपां प्रणयनाय विशिष्टम् । भाजनमाज्यहविर्ग्रहणार्थं त्विध्ममथो परिसादय दर्भान् ॥' इति । आज्यहोमेषु दर्वीमत्सु तु कर्मस्वयं क्रमः— 'स्थाली चरोः प्रोक्षणभाजनं च दर्वीस्रुवौ सादय दर्विहोमे । पात्रं प्रणीतार्थमथाज्यपात्रमिध्मं क्रमेण क्रमवित्कुशैश्च ॥' ततोऽप्रच्छि

आग्राविस्युक्तलक्षणे पवित्रे गृहीत्वा प्रोक्षणपात्रे निधायाप आसिन्य ताभ्यां त्रिरुत्पूय उत्तानानि पात्राणि कृत्वा विस्रस्येध्म सर्वाणि पात्राणि प्रोक्षति । ततः प्रणीतापात्र प्रत्यगग्नेर्निधाय तस्मिंस्ते पवित्रे अन्तर्धायाद्भिः पूरयित्वा गन्धादि प्रक्षिप्य पाणिभ्यां पात्र नासिकान्तमुद्धृत्योत्तरतोऽग्निं दर्भेषु निधाय दर्भैः प्रच्छाद्यासादयेदिति । आचार्यस्य तु पूर्णपात्र कार्यम् । अन्यस्य तु करणेऽभ्युदयः । अकरणे न प्रत्यवाय इत्याशयः ॥ ॥ इत्थ चान्यशास्त्रे दृष्टम् । पूर्णपात्र निधानानन्तर तत्रस्थे पवित्रे गृहीत्वाज्यस्थाल्या निधायाज्यमासिच्योदगङ्गारानपोह्य तेष्वधिश्रित्याज्यमवज्वलयेत् । द्वे दर्भाग्रे प्रच्छिद्य प्रक्षाल्याज्ये प्रत्यस्य पुनर्ज्वलता तेनैवोल्मुकेन त्रि॰ परिहरेत् येनावज्वलन कृतम् । तत॰ शनैरदगुद्वास्याङ्गारानतिसृज्य तत्रस्थमेवाज्यमुत्पूय पवित्रे त्वद्भिः प्रोक्ष्याग्नौ विनिक्षिपेदिति । आचार्यस्योत्पवन नित्यम् । अ यत्पाक्षिकम् । पूर्ववदित्याकूतम् ॥ स्रुक्स्रुवसमार्जनमप्यन्यशास्त्रे दृष्टम् । तस्यापीच्छात॰ क्रिया । अनयो॰ समार्ग उच्यते । दक्षिणेन हस्ते नोभौ गृहीत्वा सव्येन काश्चिद्दर्भानादाय सहैवाग्नौ प्रताप्य जुहू निधाय दक्षिणेन पाणिना स्रुवस्य बिलं दर्भाग्रैर्बिलादारभ्य प्रागपवर्ग त्रिः समृज्याधस्तादग्रेणैवाग्रमभ्यात्मं त्रिः समार्ष्टि । ततो दर्भाणा मूलेन दण्डस्याधस्तात् बिलपृष्ठादारभ्य यावदुपरिष्टाद्बिल तावत्त्रि समार्ष्टि । अथाऽद्भि' प्रोक्ष्य स्रुव निष्टप्याज्यस्थाल्यां निधायोदकस्पृष्टैरेव दर्भैर्जुहू चैवमेव समार्ष्टि । ततो दर्भानद्भिः प्रक्षाल्याग्नावनुप्रहरेत् । एव समार्गः। स्विष्टकृदन्ते चेध्मसन्नहनानामग्नौ प्रासन दृष्टम् । अन्यदपि यदस्माच्छास्त्राऽविरुद्ध परशास्त्रे दृष्ट तदपीच्छात कार्यमिति ज्ञापयितुं प्रागुत्पुनातीति पुनराहारप्रतिषेधः कृत॰ । किच उत्पु

नाति त्रिरित्येव वाच्य लाघवार्थम् । तथा सति सर्वत्रैव क र्मावृत्ताविव्यनेन सकृन्मन्त्रेण द्विस्तूष्णीं इति सिद्ध्यति । एव सिद्धे इद वचन गृह्ये कर्मावृत्तौ मन्त्रावृत्तिर्भविष्यतीत्येवमर्थं म् । पूर्वयोग किमर्थ. । अस्याधिकारार्थं इति चेत् । तर्हि प्रागुत्पुनात्याज्यमित्यत्रैव वाच्यम् । अथ पवित्रसज्ञार्थ. तर्हि कुशौ पवित्रे इत्यत्रैव वाच्यम् । उच्यते । पूर्वेणामन्त्रकमुत्पवन विधीयते । अनेन तु समन्त्रकम् । तत्र वैतानिके अमन्त्रक गृह्ये कर्मणि समन्त्रकमित्येव विनिवेश. ॥ ३ ॥

## कृताकृतमाज्यहोमेषु परिस्तरणम् ॥ ४ ॥

कृतिरेव कृतम् । कृत च अकृत च यस्य तत्तथोक्तम् । आ ज्यमेव यत्र हवि स आज्यहोम. । अन्यथाज्यग्रहणस्य वैय र्थ्यं स्यात् । सर्वत्र ह्याघारादय' सन्त्येव । आज्यहोमेषु परि स्तरण कार्यं वा न वेत्यर्थ. । अय च परिस्तरणविकल्पो यत्राग्रहणमस्ति यथा 'आज्याहुतीर्जुहुयात्' इति तत्रैव भवति न पुनरनादिष्टाज्यहोमेषु । यद्यनादिष्टहोमेष्वप्यय विकल्प. स्यात् तत्राज्यग्रहणमपार्थक स्यात् ॥ ४ ॥

## तथाज्यभागौ पाकयज्ञेषु ॥ ५ ॥

तथेति । कृताकृतावित्यर्थः । पाकयज्ञेषु सर्वेष्वाज्यभागौ कार्यौ वा नवेत्यर्थ । पाकयज्ञग्रहणमाज्यहोमाधिकारनिवृ त्त्यर्थम् ॥ ५ ॥

## ब्रह्मा च धन्वन्तारयज्ञशूलगववर्जम् ॥ ६ ॥

तथेति वर्तते । पाकयज्ञेष्विति च । ब्रह्मा च सर्वेषु पाक यज्ञेषु कृताकृतो भवति । धन्वन्तरियज्ञ शूलगव च वर्जयि-त्वा । अथ तयोर्नित्यो भवति उत नैव भवति । नित्यो भव तीति ब्रूमः । कुतः । तयोरुपदेशात् । 'ब्रह्माणमग्नि चान्तरा

वै वैद्य चरित्रवन्त ब्रह्माणमुपवेश्य' इति च । तर्हि तस्मादेव नित्योऽस्तु किमनेनेति च शङ्का न कार्या । अस्मिन्विकल्पमति पेधेऽसति उपदेशस्य पक्षे कृतार्थत्वात् । तयोरपि ब्रह्मा चौ लवत्कृताकृतः स्यात् । ब्रह्मास्ति चेत्प्रणीताप्रणयनात्पूर्वं स मस्तपाण्यङ्गुष्ठो भूत्वाऽग्रेणाग्निं परीत्य दक्षिणतः कुशेषु 'निर स्तः परावसुः' इति तृण प्रत्यग्दक्षिणा निरस्य 'इदमहमर्वा वसोः सदने सीदामि' इति मन्त्रेणोपविशेत् । ततः 'बृहस्पति र्ब्रह्मा ब्रह्मसदन आशिष्यते बृहस्पते यज्ञं गोपाय' इत्यन्त ब्रह्मजप जपेत् । ततो 'ब्रह्मन्नप प्रणेष्यामि' इति कर्त्राऽतिसृ ष्टो 'भूर्भुवःस्वर्बृहस्पतिप्रसूत' इति जपित्वा 'ॐ प्रणय' इ त्यतिसृजेत् । केचिदतिसर्जन प्रत्यतिसर्जन च नेच्छन्ति । क र्मान्ते प्रायश्चित्तानि सस्थाजप च कुर्यात् । सर्वदा यज्ञमना भवेदुदङ्मुखश्च ॥ ६ ॥

## अमुष्मै स्वाहेति जुहुयात् ॥ ७ ॥

कचिन्नामधेयेन होम उक्तः । 'सावित्र्यै ब्रह्मणे' इत्यादि । कचिन्मन्त्रेण होम उक्तः । 'अग्ने नय सुपथा राये अस्मान्' इति चतसृभिरिति । यत्र तु नोभयथा तत्र तु नामधेयेन कथ होम स्यादित्येतत्सूत्रम् । प्राजापत्यस्य स्थालीपाकस्य हुत्वा काम्याश्चरव इत्यादौ ॥ ७ ॥

## अग्निरिन्द्रः प्रजापतिर्विश्वेदेवा ब्रह्मेत्यनादेशे ॥८॥

यत्र होमस्यानादेशः कर्मणश्चादेशस्तत्रैता देवता होतव्याः । कुत्र । जातकर्मादौ । तर्हि रथारोहणेऽपि स्यात् । एव तर्हि अन्यथा व्याख्यास्यामः । यत्र होमश्चोद्यते न मन्त्रः चौलक र्मादौ 'नैके काचन' [सू० १।४।६] पक्षे तत्रैताभ्यो देवता भ्यो जुहोति । मन्त्रानादेश इतीयमेव व्याख्या साध्वी । म न्त्रप्रकरणत्वात् । तेन जातकर्मादौ न होमोऽस्ति । अन्ये तु

पूर्वोक्तदोषपरिहारेण वर्णयन्ति । यत्र परशास्त्रे होमश्चोद्यते स्वशास्त्रे तु कर्ममात्रं तत्रैता देवता भवन्तीति । क । जात कर्मादौ ॥ ८ ॥

## एकबर्हिराद्याज्यस्विष्टकृत॰ स्युस्तुल्यकाला ॥ ९॥

एकबर्हिरादिर्येषां पाकयज्ञानां ते तथोक्ताः । तुल्यकाला एककाला॰ । एकस्मिन्काले यद्यनेके पाकयज्ञा कार्यत्वेन प्राप्तास्तदा ते समानतन्त्रा॰ कार्या इत्यर्थ । किमुदाहरणम् । यदा पर्वणि रात्रौ काम उत्पद्यते तदा काम्यपार्वणयोरेक कालत्वम् । यदा वाऽग्रयणाऽश्वयुजीकर्मणी आश्वयुज्या क्रियेते तदा तयोरेककालत्वम् ॥ ९ ॥

बर्हिरादिग्रहणस्य तन्त्रोपलक्षणार्थतां स्पष्टयितु यज्ञगाथामुदाहरति—

## तदेषाभियज्ञगाथा गीयते । पाकयज्ञान्समासाद्य एकाज्यानेकबर्हिष । एकस्विष्टकृत कुर्यान्नानापि सति दैवते ॥१०॥ इति ॥३॥

तस्मिन्नर्थे एषा यज्ञगाथाऽभिगीयते पठ्यते । बहून्पाकयज्ञानेकस्मिन्काले समासाद्य प्राप्य एकाज्यानेकबर्हिष॰ एक स्विष्टकृत कुर्यान्नानापि सति दैवते । न प्रतिदैवत तन्त्रमाव र्तयितव्यमित्यर्थ॰ ॥ १० ॥ इति प्रथमे तृतीया कण्डिका ॥ ३ ॥

## उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहा ॥ १ ॥

अनेन चौलकर्मादीनां कालो विधीयते । उदग्यदा गच्छत्यादित्यस्तदुदगयनम् । तथा लोकप्रसिद्धेः । आपूर्यमाणस्य चन्द्रस्य य॰ पक्षः स तथोक्तः । स हि मासस्य च पक्षस्य च

कर्ता । अथवा आपूर्यमाणश्चासौ पक्षश्च आपूर्यमाणपक्षः । सहि चन्द्ररश्मिभिरापूर्यते शुक्रपक्ष इत्यर्थः । ज्योतिःशास्त्राविरुद्ध कल्याण नक्षत्रम् । चौलकर्मेति चौलस्यैव सञ्ज्ञान्तर ननु व्रतादेशानामय काल इष्यते । स कथ प्राप्नोति । उपनयनातिदेशात् । तर्हि अत्र गोदानग्रहणमपार्थक चौलातिदेशात् । उच्यते । समावर्तनार्थं गोदानग्रहणम् । 'गोदानिक कर्म कुर्वीत' इति कर्मग्रहण यथा कर्मणोऽन्यनियमे वाग्यमनादिक निवर्तयति तथा कालमपि निवर्तयेत् । तस्माद्गोदानग्रहण यत्र गोदानगन्धोऽप्यस्ति तत्रापि यथा स्यात् । तर्हि समावर्तनग्रहणमेव कार्यम् । उच्यते । लाघवार्थे गोदानग्रहणम् ॥ १ ॥

## सार्वकालमेके विवाहम् ॥ २ ॥

एके आचार्याः सर्वस्मिन्काले विवाहमिच्छन्ति । नोदगयनादिनियम. । तेषां कोऽभिप्रायः । दोषश्रवणात् 'ऋतुमत्या हि तिष्ठन्त्यां दोष' पितरमृच्छति' इति । अन्ये च लौकिका दोषाः समुत्पद्यन्ते ॥ २ ॥

## तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयात् ॥ ३ ॥

तेषांग्रहण किमर्थम् । विवाहस्यानन्तरत्वात्सर्वेषा प्राप्त्यर्थमिति चेत् । तन्न दर्शनात् । सर्वेषां स्यु. यदय विवाहे चतुर्थीमित्याह । उच्यते । तेषां सवधिन्योऽन्तर्वर्तिन्य एता आहुतयो भवन्ति ननु तेभ्य. पूर्व भवन्तीत्येवमर्थ तेषाग्रहणम् । तर्हि पुरस्ताद्ग्रहणमपार्थकम् । न । प्रयोजनमुपरिष्टाद्वक्ष्यामः । सख्यावचन किमर्थम् । तत्रैके ब्रुवते । यत्र परिमाणवचन प्रत्यृचग्रहण वा नास्ति 'धाता ददातु दाशुप इति द्वाभ्या' इत्यादौ तत्र कथ प्रत्यादेश होम स्यादिति । तदसत् । एकमन्त्राणि कर्माणीतिन्यायात् । अपि च । स्वाहाकारान्तैर्मन्त्रैरिति प्रतिमन्त्रं स्वाहाकारः प्राप्त. स च प्रदानार्थः । नच तमतिक्रम्य

होतव्यमिति युक्तं वक्तुमस्य विद्यमानाया गतौ। तेन सर्वत्र प्रत्यृचमेव होम इति सिद्धम्। का पुनरस्य गतिः। तन्नैके नियमार्थमिति प्राहुः। समुच्चयपक्षेऽपि कथं चतस्र एव स्युः न बह्व्य इति कथं प्रयोगः एकैकस्या ऋचोऽन्ते एकैका आहुतिरिति। तदप्यसत्। प्राधान्येनाहुतिविधिप्रकरणत्वादाहुतिसमुच्चय एव न मन्त्रसमुच्चयः। किमर्थं तर्हीदं नियमार्थमेव चतस्र एव स्युरिति। तेनाज्यभागौ न भवतः। तर्हि स्विष्टकृदपि न स्यात्। न। पुरस्तान्नियमार्थं हि पुरस्ताद्ग्रहणं कृतम्। आघारौ तु स्त एव अनाहुतित्वात्। आज्यग्रहणं परिस्तरणविकल्पार्थम्॥ ३॥

**अग्न आयूंषि पवस इति तिसृभिः प्रजापते न त्वदेतान्यन्य इति च व्याहृतिभिर्वा॥ ४॥**

चतसृभिः। चतसृणामेव हि सूत्रे व्याहृतिसंज्ञा कृता। व्याहृतिभिश्च भूः स्वाहेत्यादिभिः॥ ४॥

**समुच्चयमेके॥ ५॥**

एके आचार्याः ऋगाहुतीनां व्याहृत्याहुतीनां च समुच्चयमिच्छन्ति। तेनाष्टाहुतयः॥ ५॥

**नैके कांचन॥ ६॥**

एके आचार्याः कामप्याहुतिं नेच्छन्ति। नैक इत्येव वक्तव्ये कांचनग्रहणमृगाहुतीनां व्याहृत्याहुतीनां चाय प्रतिषेधो यथा स्यात् किंशब्दस्य सर्वनामत्वात् सर्वनाम्नां च प्रकृतपरामर्शत्वात् अन्यास्त्वाहुतयो होतव्या इत्येवमर्थम्। तेनाऽनादेशाहुतयः सिद्धाः॥ ६॥

**त्वमर्यमा भवसि यत्कनीनामिति विवाहे चतुर्थी॥ ७॥ ॥ ४॥**

अत्र संशय'। पूर्वस्या बाध उतोत्कर्ष इति। उत्कर्ष इति ब्रूमः। असमानजातित्वात्। समानजातेरेव हि बाधो विहित। एप समानजातिधर्म इति तच्छब्दचोदितश्च समानजातिर्भवति। यथा। अथ सामिधेन्य. ताः सामिधेन्य इति। अत्र च तच्छब्दचोदितत्वान्न बाध अपि तूत्कर्ष'। यथा 'प्रतिप्रस्थाता वाजिने तृतीय.' इत्यत्र आग्नीध्रस्योत्कर्षस्तद्वदत्रापि। अपि च। सख्यानिर्दिष्टो न पूर्वं बाधते। यत्र तु बाधते तत्र स्थानग्रहण करोति। यथा तृतीयाहुतिस्थाने महाव्रतमिति। तस्मादुत्कर्ष इति सिद्धम्॥७॥ इति प्रथमे चतुर्थी कण्डिका॥४॥

## कुलमग्रे परीक्षेत ये मातृत पितृतश्चेति यथोक्त पुरस्तात्॥ १॥

कुलशब्देनोभौ वशौ महापातकादिरहिताविति सिद्धौ तथाऽपस्मारादिदोषरहिताविति कुलमग्रे प्रथम परीक्षेत। कथम्। ये मातृत. पितृतश्चेति यथोक्त पुरस्तात्। 'ये मातृतः पितृतश्च दशपुरुष समनुष्ठितविद्यातपोभ्या पुण्यैश्च कर्मभिर्येषामुभयतो वा ब्राह्मण्य निनयेयुः पितृतश्चैके' इति। अग्रेवचन वधूवरगुणेभ्यः कुलमेव प्रधान स्यादित्येवमर्थम्॥ १॥

अथ वरगुणमाह—

## × बुद्धिमते कन्यां प्रयच्छेत्॥ २॥

अर्थदर्शिनी बुद्धिः। कोऽर्थ। य. शास्त्राविरुद्ध.। तद्वते बुद्धिमते कन्या प्रयच्छेत्॥ २॥

अथ कन्यागुणमाह—

## बुद्धिरूपशीललक्षणसपन्नामरोगामुपयच्छेत॥ ३॥

बुद्धिरूपशीललक्षणैर्युक्ता रोगवर्जितां कन्यामुपयच्छेत स्वीकुर्यात्। यत्र स्वमनो रमते तद्रूपम्॥ ३।

लक्षणाना दुरवगाहत्व मत्वा परीक्षान्तरमाह—

दुर्विज्ञेयानि लक्षणानीति ॥ ४ ॥

लक्षणानि दुर्ज्ञेयानीति कृत्वा एव परीक्षेत ॥ ४ ॥

अष्टौ पिण्डान्कृत्वा, ऋतमग्रे प्रथम जज्ञ ऋते सत्यं प्रतिष्ठित। यदिय कुमार्यभिजाता तदियमिह प्रतिपद्यतां यत्सत्य तद्दृश्यतामिति पिण्डानभिमन्त्र्य कुमारी ब्रूयादेषामेकं गृहाणेति ॥ ५ ॥

क्षेत्रादिभ्योऽष्टभ्यो मृदमाहृत्याऽष्टौ पिण्डान्कृत्वा 'ऋतमग्रे' इत्यनेन मृत्पिण्डानभिमन्त्र्य कुमारी ब्रूयादेषामेक गृहाणेति। पुन पिण्डग्रहण कुमार्या अभिमन्त्रण माभूत्। सापि हि द्वितीया निर्दिष्टा ॥ ५ ॥

क्षेत्राचेदुभयत सस्याद्गृह्णीयादन्नवत्यस्या' प्रजा भविष्यतीति विद्याद्गोष्ठात्पशुमती वेदिपुरीषाद्ब्रह्मवर्चस्विन्यविदासिनो ह्रदात्सर्वसपन्ना देवनात्कितवी चतुष्पथाद्द्विप्रव्राजिनीरिणादधन्या श्मशानात्पतिघ्नी ॥ ६ ॥ ॥ ५ ॥

उभयत सस्यात्क्षेत्रादाहृत मृत्पिण्ड गृह्णीयाचेदस्याः प्रजा अन्नवती भविष्यतीति विद्यात्। एवमुत्तरत्रापि नेयम्। यद्वे कस्मिन्सवत्सरे द्विः फलति तदुभयतःसस्य क्षेत्रम्। अपवृत्ते कर्मणि या वेदिस्तस्या॰ पुरीषम्। अविदासिह्रदो नामाऽशोष्य ह्रदम्। देवन द्यूतस्थानम्। यत्रोप्तबीजं न प्ररोहति तादिरिणम्। द्वौ प्रव्रजतीति द्विप्रव्राजिनी। स्वैरिणीति यावत्। पति हन्तीति पतिघ्नी। अत्र प्रजास्तुतिनिन्दाद्वारेण सैव स्तुता

निन्दिता चेति मन्तव्यम् । उत्तरैस्त्रिभिर्वाक्यैः सैव निन्द्यते ॥ ६ ॥ इति प्रथमे पञ्चमी कण्डिका ॥ ५ ॥

अलङ्कृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाह । तस्यां जातो द्वादशावरान्द्वादश परान्पुनात्युभयत । ऋत्विजे वितते कर्मणि दद्यादलङ्कृत्य स दैवो दशावरान्दश परान्पुनात्युभयत. । सह धर्मं चरत इति प्राजापत्योऽष्टावरानष्ट परान्पुनात्युभयत. । गोमिथुन दत्त्वोपयच्छेत स आर्षं सप्तावरान्सप्त परान्पुनात्युभयतः । मिथ समय कृत्वोपयच्छेत स गान्धर्वः । धनेनोपतोष्योपयच्छेत स आसुरः । सुप्तानां प्रमत्तानां वापहरेत्स पैशाच. । हत्वा भित्त्वा च शीर्षाणि रुदतीं रुदद्भ्यो हरेत्स राक्षस ॥ १ ॥ ॥ ६ ॥

कन्यामलङ्कृत्योदकपूर्वां दद्यात् । एष विवाहो ब्राह्मसञ्ज्ञो भवति । तस्यां कन्यायां जातो द्वादशाऽवरान्नुत्पत्स्यमानान् द्वादश परान्पुनाति । उभयतो मातृत. पितृतश्चेत्यर्थ. । एव मुत्तरत्रापि नेयम् । वितते कर्मणीति । वैतानिके कर्मणीत्यर्थः । मिथ'समयकरण नाम त्व मम भार्या भव अह तव पुरुषो भ वामीत्येवरूपो विवाहो गान्धर्वसंज्ञ. । कन्यापित्रे धनदानेन यो विवाह स आसुरसंज्ञ' । सुप्तेभ्य प्रमत्तेभ्योऽसावधाने भ्यः कन्यामपहृत्य यो विवाहः स पिशाचसंज्ञकः । युद्ध कृत्वा कन्यामपहृत्य यो विवाह. स राक्षससञ्ज्ञक' । एवमेतेऽष्टौ विवाहाः । तत्र पूर्वेषु चतुर्षु पूर्वः पूर्वः प्रशस्तः । उत्तरेषु चत

षु उत्तरोत्तर पापीयान् । तत्र पूर्वो ब्राह्मणस्य । इतरयो प्रतिग्रहाभावात् आर्त्विज्याभावाच्च । गान्धर्वः क्षत्रियस्य पुरा णे दृष्टत्वात् । राक्षसश्च तस्यैव युद्धसयोगात् । आसुरस्तु वै श्यस्य धनसयोगात् । इतरे त्रयोऽनियता. ॥ १ ॥ इति प्रथमे षष्ठी कण्डिका ॥ ६ ॥

## अथ खल्वुच्चावचा जनपदधर्मा ग्रामधर्माश्च तान्विवाहे प्रतीयात् ॥ १ ॥

अथशब्दोऽधिकारार्थे । यद्वक्ष्यते तद्विवाहे वेदितव्यमिति। खल्वुक्त' । उच्चावचग्रहण कथम् । एते जनपदधर्मादयो ना नाप्रकारा. क्रियेरन् नैकेन कर्त्रा समुच्चेरन्निति । जनपदधर्मा देशधर्मा. । ग्रामशब्देन नगरमुच्यते । धर्मशब्दादेव द्वितीया निर्देशे सति अन्वये सिद्धे तानितिवचन कुलधर्मा अपि का र्या इत्येवमर्थम् । तान् । तादृशानित्यर्थः । विवाहाधिकारे पुन विवाहग्रहण कृत्स्ने विवाहे यथा स्युरित्येवमर्थम् । इतरथोप यमनकालादुत्तरकाल विहितत्वादुपयमने न स्यु' । उपयमन नाम कन्याया' स्वीकरणम् । प्रतीयादिति । कुर्यादित्यर्थ' ॥ १ ॥

## यत्तु समान तद्वक्ष्याम ॥ २ ॥

किमर्थमिदम् । यथा अन्यान्युपदेशादेव सर्वत्र भवन्ति पार्वणादीनि तथेदमपि स्यात् । नियमार्थ तर्हि जनपदादिध र्माणा वक्ष्यमाणधर्माणां च विरोधे सति वक्ष्यमाणमेव धर्म कुर्यात् । जनपदादिधर्ममिति यद्वक्ष्यामस्तत्सर्वत्र समानमेवेत्य र्थ' । वैदेहेषु सद्य एव व्यवायो दृष्टः । गृह्ये तु 'ब्रह्मचारिणौ त्रिरात्रम्' इति ब्रह्मचर्य विहितम् । तत्र गृह्योक्तमेव कुर्यान्न देशधर्ममिति सिद्धम् ॥ २ ॥

## पश्चादग्नेर्दृषदमश्मान प्रतिष्ठाप्योत्तरपुरस्तादुद-

**कुम्भ समन्वारब्धायां हुत्वा तिष्ठन्प्रत्यङ्मुखः प्राङ्मुख्या आसीनाया गृभ्णामि ते सौभगत्वाय हस्तमित्यङ्गुष्ठमेव गृह्णीयाद्यदि कामयीत पुमांस एव मे पुत्रा जायेरन्निति ॥ ३ ॥**

अग्निप्रतिष्ठापनोत्तरकाल पश्चादग्नेर्दृषदमश्मान प्रतिष्ठाप्य उत्तरपूर्वदेशे उदकुम्भ प्रतिष्ठापयेत् । तत आज्यस्य बर्हिषि सादनान्त कृत्वा समन्वारब्धायां वध्वा इ माभ्याधानान्त कृत्वा तत पूर्वोक्ता आज्याहुतीर्हुत्वा तिष्ठन्प्रत्यङ्मुख प्राङ्मुख्या आसीनाया अङ्गुष्ठमेव गृह्णीयात् गृ[भ्णा]मीत्युक्त्वा पुत्रकामश्चेत् । मंत्रस्तूत्तरयोरपि हस्तग्रहणयोर्भवत्येवायम् । दृपत् प्रसिद्धा । अश्मा तत्पुनक. । तनोभयो प्रतिष्ठापन सिद्धम् । एवं चेद्दोप' । 'अश्मानमारोहयति' [गृ० १ । ७ । ७ ] इत्यत्र पुत्रकारोहण स्यात् । तर्हि अश्मग्रहण तस्य विशेषण स्यात् । दृपदमश्मानमिति । अश्ममयीमित्यर्थ । मृण्मय्यपि हि लोके दृपद्विद्यते । तर्हि पुत्रकप्रतिष्ठापन न स्यात् । न । स्यादेव मङ्गलार्थत्वात् । दक्षिणतः पत्न्युपविशेदुत्तरतः पतिरिति शास्त्रान्तरे दृष्टम् । स्रुवेण होम' साधनान्तराऽनुपदेशात् । एवभूतो व्यक्तहोमेत्यनेनैवावस्थाने सिद्धे 'तिष्ठन्समिधमादध्यात्'[श्रौ०] इत्यत्र तिष्ठन् ग्रहणं कथम् । अन्यत्रासीनस्य कर्माणि स्युरित्येवमर्थम् । ततोऽत्राप्यासीनप्राप्तौ तन्निवृत्त्यर्थं तिष्ठन् ग्रहणम् । प्रत्यङ्मुख इति प्राङ्मुखत्वनिवृत्त्यर्थम् । 'तस्य नित्याः प्राञ्चश्चेष्टा.'[श्रौ० १ । १ । ८ ]इत्यनेन प्राङ्मुखत्वे सिद्धे प्राङ्मुख्या आसीनाया इति वचन प्रत्यङ्मुखाधिकारनिवृत्त्यर्थम् । आसीनाया इत्येतत्कथम् । इत उत्तर वध्वा विहितं कर्म तिष्ठन्त्या स्यादित्येवमर्थम् । 'उत्तानेनोत्तान पाणि गृह्णीयान्नी

चेन चोत्तानम्' इति शाखान्तरे दृष्टम् । पुत्रशब्द॰ पुंसि स्त्रिया च स्मृतौ॰ दृष्टः—'अकृता वा कृता वापि य विन्देत्सदृशात्सुतम् । पौत्री मातामहस्तेन दद्यात्पिण्ड हरेद्धनम् ।' इति ॥ [मनु॰ ९।१३६] दौहित्रेण मातामह॰ पौत्री भवतीत्यर्थः । लोके च दुहितरि पुत्रशब्द मयुञ्जाना दृश्यन्ते एहि पुत्रेति । मन्त्रे च दृश्यते । 'पुमास्ते पुत्रो जायताम्' इति । तस्मात्पुमांस पुत्रा इति विशेषणम् । अथवा । 'पुन्नाम्नो नरकाद्यस्मात्पितर त्रायते सुत॰ । तस्मात्पुत्र इति प्रोक्त॰ स्वयमेव स्वयभुवा ॥' इति । [मनु॰ ९।१३८ ]एवविध स पुत्रो जायेत न प्रथमप्रकृतिमात्रमित्येवमर्थमुभयोर्ग्रहणम् ॥ ३ ॥

अङ्गुलीरेव स्त्रीकाम॰ ॥ ४ ॥

एवकारोऽङ्गुष्ठनिवृत्त्यर्थ॰ । स्त्रीकामो दुहितृकाम इत्यर्थ॰ ॥४॥

रोमान्ते हस्त साङ्गुष्ठमुभयकाम ॥ ५ ॥

उभयकाम पुत्रदुहितृकाम॰ अङ्गुष्ठाङ्गुलीभि' सह हस्त गृह्णीयात् ॥ ५ ॥

प्रदक्षिणमग्निमुदकुम्भ च त्रि परिणयञ्जपति । अमोहमस्मि सा त्व सा त्वमस्यमोह द्यौरह पृथिवी त्व सामाहमृक् त्व तावेह विवहावहै । प्रजां प्रजनयावहै सप्रियौ रोचिष्णू सुमनस्यमानौ जीवेव शरदः शतमिति ॥ ६ ॥

अग्निमुदकुम्भ च त्रि॰प्रदक्षिण वधू' स्त्रीः परिणयञ्जपति । अमोहमस्मीति । उदकुम्भग्रहणमन्येषां यज्ञपात्राणां बहिष्करणार्थमित्येके । अन्ये तु विवाहे यदन्यदृष्टं पात्र अ[illegible]स्यैव बहि करणार्थमिति । त्रिर्ग्रहणं परिणयनेन स[illegible] उ-

त जपेन । यदि पूर्वेण तर्हि सकृज्जपः स्यात् । अथ जपेन तर्हि सत्कृत्परिणीति । पूर्वेणेति ब्रूम' । कुतः । परिणीय परिणीयेति तस्य बहुत्व दर्शितम् । जपश्च परिणयाङ्गमिति कृत्वा यावत्परिणयनमावर्तते ॥ ६ ॥

परिणीय परिणीयाश्मानमारोहयति।इममश्मानमारोहाश्मेव त्व स्थिरा भव । सहस्व पृतनायतोऽभितिष्ठ पृतन्यत इति ॥ ७ ॥

वीप्सावचन सर्वपरिणयनेष्वश्मानमारोहण कारयितव्य मित्येतदर्थम् । अथास्य कर्मणः क कर्ता । आचार्य । कुत । वक्ष्यति । 'शिरसी उदकुम्भेनावसिच्य' [गृ० १ ७ २० ] इति । स्वयकर्तृत्वे सति अवसेचन कर्तु न शक्यते । तदसत् । आचार्येण ह्यय विसृष्टो विवाह करोति । उदकुम्भग्रहण तु तत्रस्थमुदकुम्भ लक्षयति ॥ ७ ॥

वध्वञ्जलावुपस्तीर्य भ्राता भ्रातृस्थानो वा द्विर्लाजानावपति ॥ ८ ॥

ततो वध्वञ्जलौ उपस्तीर्य वध्वा भ्रात्रादिर्द्विर्लाजानावपति। वरो जामदग्न्यश्चेत्त्रिः । ततः शेष प्रत्यभिघार्य अवदान च प्रत्यभिघारयति । एवमवदायावदाय त्रिभिर्मन्त्रैर्जुहोति । भ्रातृस्थान' पितृव्यपुत्रो मातुलपुत्रश्च ॥ ८ ॥

त्रिर्जामदग्न्यानाम् ॥ ९ ॥

पञ्चावत्तिनामित्यर्थ ॥ ९ ॥

प्रत्यभिघार्य हवि ॥ १० ॥

हविःशब्दः शेषे वर्तते । यथा नात्र हवीषीति ॥ १० ॥

अवत्तं च ॥ ११ ॥

अवदानमित्यर्थः । उपस्तरणाभिघारणे कः करोति । भ्राता । कुतः । समानकर्तृत्वनिर्देशात् । तदयुक्तम् । यदि ह्यत्र भ्राताऽभिप्रेतः स्यात् वध्वञ्जलौ भ्रातोपस्तीर्येत्येवावक्ष्यत् । तस्माद्वर एव करोति । यत्तूक्तं समानकर्तृत्वनिर्देशादिति तत्र ब्रूमः । असमानकर्तृकत्वेऽपि हि क्त्वाप्रत्ययो दृश्यते । यथा 'आज्याहुतिं हुत्वा मुख्यं धनं दद्यात्' इति होमे ब्रह्मा कर्ता । दाने यजमानः इत्यादिषु पूर्वकालतामात्रमेव विवक्षितं तद्वदत्रापि ॥ ११ ॥

एषोऽवदानधर्मः ॥ १२ ॥

यत्र यत्रावदानमस्ति तत्र तत्रैष धर्मो भवतीत्यर्थः । मध्यात्पूर्वार्धाच्च हविषोऽवद्यतीत्यादौ ॥ १२ ॥

अर्यमणं नु देवं कन्या अग्निमयक्षत । स इमां देवो अर्यमा प्रेतो मुञ्चातुनामुतः स्वाहा । वरुणं नु देवं कन्या अग्निमयक्षत । स इमां देवो वरुणः प्रेतो मुञ्चातुनामुतः स्वाहा । पूषणं नु देवं कन्या अग्निमयक्षत । स इमां देवः पूषा प्रेतो मुञ्चातुनामुतः स्वाहेत्यविच्छिन्दत्यञ्जलिं स्रुचेव जुहुयात् ॥ १३ ॥

को जुहोति । वधूः । कुतः । अविच्छिन्दत्यञ्जलिमिति स्त्रीलिङ्गनिर्देशात् । कस्यैते मन्त्राः । वध्वाः । कुतः सा हि जुहोति । मन्त्रलिङ्गात् । कन्या अग्निमयक्षतेति । तदसत् । नहि स्त्रीणां मन्त्रेष्वधिकारोऽस्ति । ननु कथं पत्नीवाचने । तत्र वचनमस्ति । अत्र तु सन्दिग्धम् । तस्माद्वरस्य मन्त्राः । मन्त्रलिङ्गाच्च ।

स इमां देव इति हि परोक्षनिर्देशः। यदि हि वध्वाः स्यु' स इमां देव इति न स्यात् । यत्तूक्तं साहि जुहोतीति । तत्र ब्रूमः अन्यस्याऽपि मन्त्रो दृश्यते । अध्वर्युर्जुहोति होता वषट्करोति । यत्तूक्तं मन्त्रलिङ्गादिति । तत्र ब्रूम. । न ह्यत्रेय कन्याऽभिधीयते। अन्या एव तु कन्या. । यदीयमभिधीयते बहुवचनं नोपपद्यते । तथाभूतश्च प्रत्ययः । तस्माद्वरस्येति सिद्धम् ॥१३।

## अपरिणीय शूर्पपुटेनाभ्यात्म तूष्णी चतुर्थम् ॥१४॥

अप्राप्तनिषेध किमर्थं । चतुर्थहोम कृत्वा कथममन्त्रकं परिणयनं स्यादित्येवमर्थमित्येके । अन्ये तु त्रीणि परिणयनान्यानन्तर्येणोक्तानि। तत्र त्रयो होमाः । तत्र कथं पूर्वं पूर्वं परिणयन कृत्वा पश्चात् होम' स्यादिति ज्ञापयितुमिति । शूर्पपुट कोण. । तूष्णीवचन प्रजापतिज्ञापनार्थम् । चतुर्थग्रहण कथम् । एतस्य द्रव्यस्य स्विष्टकृत न स्यात् स एव च कर्ता यथा स्यादिति । तेन वधूर्जुहोति ॥ १४ ॥

## ओप्योप्य हैके लाजान्परिणयन्ति तथोत्तमे आहुती न सन्निपततः ॥ १५ ॥

अभिमतार्थज्ञापनार्थो हशब्द । एके लाजानोप्योप्य पश्चात्परिणयन्ति । किमिति । तथा सत्युत्तमे आहुती न सन्निपतत इति कृत्वा । पूर्वस्मिस्तु पक्षे उत्तमे आहुती सन्निपततः। कोऽयं सन्निपातो नाम यदि पूर्वाहुतिशिरसि प्रक्षेप. । न तर्हि क्वचिदप्यसाविष्यते किं पुनः पूर्वस्मिन्पक्षे । अथानन्तर्यम् । न । तर्ह्यसौ दोष. । पार्वणादौ दृष्टत्वात् । तस्मादयमर्थः । यथोत्तमे आहुती न सन्निपततस्तथा कर्तव्यम् । उत्तमयोराहुत्योर्मध्ये परिणयनं कर्तव्यमित्यर्थः । कथं वा न स्यात् । अपरिणीय शूर्पपुटेनाभ्यात्ममिति । अन्यार्थं कृतमपीह मध्ये

परिणयन निवर्तयेत्। अथवा पूर्वस्मिन्पक्षे उत्तमे सन्निपततः। अत्र तु न सन्निपतत इति वदन् अपरिणीयवचन चतुर्थपरिणयनार्थमित्यस्मिन्नपि पक्षे पूर्व परिणयन कृत्वा पश्चात् होमः न चानन्तर्येण होम इति ज्ञापयति। यदि त्वानन्तर्येण होमः स्यात्सर्वासामेव सन्निपातादुत्तमयोराहुत्योः पूर्वस्मिन्पक्षे सन्निपात इति नोपपद्यते ॥ १५ ॥

अथास्यै शिखे विमुञ्चति यदि कृते भवतः ॥१६॥

अथशब्द इदानी स्विष्टकृन्निवृत्त्यर्थं। अस्या इति वरस्य निवृत्त्यर्थं। यदीत्यनित्ये। देशधर्मादिना यदि कृते भवतः १६ के कृते भवत इत्याह—

ऊर्णास्तुके केशपक्षयोर्बद्धे भवतः। प्र त्वा मुञ्चामि वरुणस्य पाशादिति ॥ १७ ॥

प्र त्वा मुञ्चामीति दक्षिणां शिखा विमुञ्चति ॥ १७ ॥

उत्तरामुत्तरया ॥ १८ ॥

प्रेतो मुञ्चामीत्युत्तरा शिखां विमुञ्चति। वरस्य तु शिखे तूष्णी विमुञ्चति ॥ १८ ॥

अथैनामपराजितायां दिशि सप्तपदान्यभ्युत्क्रामयतीष एकपद्यूर्जे द्विपदी रायस्पोषाय त्रिपदी मायोभव्याय चतुष्पदी प्रजाभ्यः पञ्चपद्यृतुभ्यः षट्पदी सखा सप्तपदी भव सा मामनुव्रता भव। पुत्रान्विन्दावहै बहूंस्ते सन्तु जरदष्टय इति ॥१९॥

अथशब्दः पूर्वेण तुल्यः। एनां वधूम्। अपराजिता प्रागुदीची। तत्र सप्तपदान्यभ्युत्क्रामयति वधू सप्तभिर्मन्त्रैः। वाक्यस्य साकाङ्क्षत्वाद्भावादेश्च योग्यत्वात्सन्निहितत्वाच्च प्रत्येक सब

च्यते । यत्रा रहस्ये उच्छिखामीति शब्द 'प्राणाय त्वापानाय त्वा व्यानाय त्वोच्छिखामि' इत्यन्त्ये वाक्ये पठितोऽपि पूर्व त्रापि सव यते तद्वदत्रापि । ऐतरेयिभिरप्युक्त 'भवादि स र्वत्र समान' इति । तेन इप एकपदी भव । सा मामनुव्रता भवेति सर्वत्र सबन्धनीयम् ॥ १९ ॥

## उभयो सन्निधाय शिरसी उदकुम्भेनावसिञ्च्य ॥ २० ॥

सप्तमे पदे अभ्युत्क्रामिते तत्रस्थ एवोभयो• शिरसी सन्निधाय केनचिदुदकुम्भमानाय्य तत्रस्थेनोदकेन शिरसी अवसिञ्चति । अथाज्येन स्विष्टकृत जुहोति ॥ २० ॥

## ब्राह्मण्याश्च वृद्धाया जीवपत्न्या जीवप्रजाया अगार एतां रात्रिं वसेत् ॥ २१ ॥

ग्रामान्तरगमने यद्यन्तरा वसति• स्यात्तदा एवगुणयुक्ताया• ब्राह्मण्या गृहेऽनन्तरां रात्रिं वसेत् । वसति कुर्यादित्यर्थ• । स्वग्रामे विवाहश्चेन्नाय विधि• ॥ २१ ॥

## ध्रुवमरुन्धती सप्तऋषीनिति दृष्ट्वा वाच विसृजेत जीवपत्नी प्रजां विन्देयेति ॥ २२ ॥ ॥७॥

समाप्ते होमे रात्रौ ध्रुवादीन्दृष्ट्वा वाच विसृजेत 'जीवपत्नी' इति मन्त्रेण । इदानी वाग्विसर्जनविधानाद्धोमादारभ्य एतावन्त काल वाचो नियम इति गम्यते । कस्याय वाग्विसर्ग• । वध्वा• । कुत• । मन्त्रलिङ्गात् । तथा हि । जीवः पतिर्यस्या• सा जीवपत्नी । जीव इति कर्तरि पचाद्यच् । 'पत्युर्नो यज्ञस योगे' 'विभाषा सपूर्वस्य' इति ङीप्प्रत्ययो नश्चान्तादेशः ॥ २२ ॥ इति प्रथमे सप्तमी कण्डिका ॥ ७ ॥

प्रयाण उपपद्यमाने पूषा त्वेतो नयतु हस्तगृह्येति यानमारोहयेत् ॥ १ ॥

विवाहहोमानन्तर स्वगृह गन्तव्यम् । तत्र यदि ग्रामान्तर गृह स्यात् । तथा सति तत्र प्रयाणे यदि यानमुपपद्यते । तथा सत्युपपद्यमाने याने यानमारोहयेद्वधू मन्त्रेण । तेन प्रयाणे यानस्याऽनियम । यानादन्येन शिविकादिना प्रयाणे च न भवति मन्त्र.। स्वग्रामविवाहपक्षे स्वगृहगमने नाय विधिः ॥ १ ॥

अश्मन्वतीरीयते सरभध्वमित्यर्धर्चेन नावमारोहयेत् ॥ २ ॥

यद्यन्तरा नाव्या नदी स्यात्तदाऽनेनार्धर्चेन नावमारोहयेत्। वधूमिति शेषः ॥ २ ॥

उत्तरेणोत्क्रमयेत् ॥ ३ ॥

उत्तरेणार्धर्चेन। अत्राजहामेत्यर्धर्चेन वधूमुदकादुत्तारयेत् ३

जीव रुदन्तीति रुदत्याम् ॥ ४ ॥

नीयमाना वधू. यदि रोदिति बन्धुवियोगात्तदा एतां जपेत्। अय विधिः स्वग्रामेऽपि भवत्यविशेषात् ॥ ४ ॥

विवाहाग्निमग्रतोऽजस्र नयन्ति ॥ ५ ॥

विवाहाग्निग्रहणमग्निविशेषनियमाभावशङ्कानिवृत्त्यर्थम्। अजस्रग्रहण ध्रियमाणस्य नयनार्थम् । तेनान्यत्र प्रयाणे समारोपण कृत्वा नयन गम्यते। अय च विधि स्वग्रामेऽपि भवत्यविशेषात् ॥ ५ ॥

कल्याणेषु देशवृक्षचतुष्पथेषु माविदन्परिपन्थिन इति जपेत ॥ ६ ॥

कल्याणेषु विवाहादिशोभनेषु देशवृक्षचतुष्पथेषु एताञ्ज पेत् ॥ ६ ॥

वासे वासे समुङ्गलीरियं वधूरितीक्षकानीक्षेत ॥ ७ ॥

वसतौ वसतौ ईक्षका' सन्ति चेत्तानेतया ईक्षेत । वासादन्य त्रेक्षणे मन्त्रः । वीप्सावचन प्रतिवसतौ मन्त्रमास्यर्थम् ॥ ७ ॥

इह प्रिय प्रजया ते समृध्यतामिति गृह प्रवेशयेत् ॥ ८ ॥

अनया वधू गृह प्रवेशयेत् । इदमादयो विधयः स्वग्रामे ऽपि विवाहे भवन्ति ॥ ८ ॥

विवाहाग्निमुपसमाधाय पश्चादस्याऽऽनडुह च र्मास्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन्नुपविष्टायां समन्वारब्धायाम्। आ न प्रजां जनयतु प्रजापतिरिति चतसृभि प्रत्यृच हुत्वा समञ्जन्तु विश्वेदेवा इति दध्न प्राश्य प्रतिप्रयच्छेदाज्यशेषेण वानक्ति हृदये ॥ ९ ॥

अग्निप्रणयनान्त कृत्वाऽग्निमुपसमादधाति । समिधः प्रक्षिप्य प्रज्वलयतीत्यर्थ' । तत' पश्चादस्याऽऽनडुह चर्मास्तृणाति। प्राग्ग्रीवमुत्तरलोम ऊर्ध्वलोम । ततोऽन्वाधानाद्याज्यस्य बर्हिषि सादनान्त कृत्वा तस्मिन् चर्मण्युपविष्टायां समन्वारब्धायां वध्वां इध्माधानाद्याज्यभागान्त कृत्वा आ नः प्रजामिति च तसृभिः प्रत्यृच हुत्वा ततः समञ्जन्त्वित्यृचा दध्न एकदेश स्वय प्राश्य वध्वे प्राशनार्थ शिष्ट दधि प्रयच्छेत् । सा तु तूष्णी प्राश्नाति । सकृत्प्रयुक्तस्य मन्त्रस्य उभयप्राशनार्थत्वादुभयार्थ

त्वम् । नाविति द्विवचनात् । आज्यशेषेण वा उभयोर्हृदये अनक्ति तेनैव मन्त्रेण । हृदये अत ऊर्ध्वमिति विवृत्या पाठ' कार्य' । मन्त्रवृत्वात् । तत स्विष्टकृतादि समापयेत् । विवाहाग्निग्रहणमन्यनिवृत्त्यर्थम् । कथ पुनरन्याग्निप्राप्तिशङ्का । 'गृह्याणि वक्ष्याम' [ गृ० १।१।१ ] इति प्रतिज्ञातम् । उच्यते । दायविभागकाले अग्नि' परिगृह्यते चेदत्राप्यन्योऽग्नि' प्रसज्येत तन्निवृत्त्यर्थमिदम् । अपि चात्र विवाहाग्निग्रहणान्न विवाहहोममात्रेणाग्नेर्गृह्यत्वसिद्धिः किर्तार्हि गृहप्रवेशनीयहोमे कृते । एवमुभाभ्यां होमाभ्यां गृह्यत्वसिद्धि' नैकेनेति ज्ञायते । तेन गृहप्रवेशनीयहोमादर्वाग्दर्शपूर्णमासप्राप्तौ पार्वणस्थालीपाको न कार्य । परिचरणहोमस्तु कार्य एव । 'पाणिग्रहणादि' [ गृ० १।९।१ ] इति वचनात् । वैश्वदेव च कार्यमेव । तस्याग्निविशेषविध्यभावात् । तेनाग्निनाशे होमद्वयं कार्यमिति सिद्धम् । उपसमाधायेति आस्तरणकालोपदेशार्थम् । अथवा समानकर्तृकत्वसिद्ध्यर्थम् । तेन यत्रोपसमाधानग्रहण नास्ति तत्रा ऽन्यो वोपसमाधान कुर्यात् । तस्मिन्निति वचन चर्मास्तरणान न्तर तत्रान्तरमिति ज्ञापनार्थम् । प्रत्यृचग्रहण कथम् । ऋगन्ते होम' स्यात् न स्वाहाकारान्त इत्येवमर्थम् । स्वाहाकार पठ ञ्जुहुयादित्यर्थ । तेन यत्र प्रत्यृचग्रहण नास्ति तत्र स्वाहाकार कृत्वा पश्चाद्धोम । आज्यशेषेण वेति सिद्धवदुपदेशादन्नादेशे आज्येन होम इति गम्यते ॥ ९ ॥

## अक्षारालवणाशिनौ ब्रह्मचारिणावलङ्कुर्वाणावधःशायिनौ स्याताम् ॥ १० ॥

विवाहादारभ्य एते नियमा भवन्त्युभयोः । 'हैडिम्बिका राजमाषा माषा मुद्गा मसूरिका' । लङ्काढक्याश्च निष्पावा-

स्तिलाद्या' क्षारसंज्ञिता' ॥' गृहप्रवेशीयहोमात्प्रागपि नियमा नामिष्टत्वाद्योगविभागः कृतः ॥ १० ॥

उत्तरावधिमाह—

## अत ऊर्ध्वं त्रिरात्र द्वादशरात्र ॥ ११ ॥

अतो गृहप्रवेशनीयहोमादूर्ध्वं त्रिरात्र द्वादशरात्र वा नियतौ स्याताम् ॥ ११ ॥

## सवत्सर वैक ऋषिर्जायत इति ॥ १२ ॥

संवत्सर वा नियतौ स्यातां एक ऋषिकल्पः पुत्रो जायत इति कृत्वा । अन्ये त्वाहु' । व्रतान्ते एक ऋषिः सपद्यते । पितृगोत्र विहाय पतिगोत्र भजत इत्यर्थः ॥ १२ ॥

## चरितव्रत' सूर्याविदे वधूवस्त्र दद्यात् ॥ १३ ॥

व्रतानन्तर सूर्याविदे कन्या उपयमनकाले उपहितं वस्त्र दद्यात् । सूर्यया दृष्टो मन्त्रः सूर्या यथा वृषाकपिरिति । सा च 'सत्येनोत्तभिता' इति सूक्तम् । कथ तत्पुनरसौ वेत्ति स्वरतो वर्णत इत्यादि ॥ १३ ॥

## अन्न ब्राह्मणेभ्य ॥ १४ ॥

दद्यादिति शेष ॥ १४ ॥

## अथ स्वस्त्ययन वाचयीत ॥ १५ ॥ ॥ ८ ॥

ॐस्वस्ति भवन्तो ब्रुवन्त्विति । ते च ॐस्वस्तीति प्रत्यूचु' ॥ १५ ॥ इति प्रथमेऽष्टमी कण्डिका ॥ ८ ॥

## पाणिग्रहणादि गृह्य परिचरेत्स्वय पत्न्यपि वा पुत्रः कुमार्यन्तेवासी वा ॥ १ ॥

पाणिग्रहणप्रभृति गृह्यमग्निं परिचरेत्स्वयं पत्न्यादयो वा । पाणिग्रहणादिवचन गृहप्रवेशनीयहोमानन्तरकाले प्रारम्भा

शङ्कानिवृत्त्यर्थम् । यद्विधास्यते तत्परिचरणम् । पत्नीकुमार्यौ न होमकर्म कुर्यातामित्येके । कुत. । स्त्रीणां मन्त्राऽनधिकारात् । अन्ये तु सहोमकम् । कुत. । वचनात् । पत्नीसन्नहनवत् । अन्तेवासी शिष्य. ॥ १ ॥

## नित्यानुगृहीत स्यात् ॥ २ ॥

अनुशब्द. परिशब्दस्य स्थाने । नित्य परिगृहीत स्यादित्यर्थः । किमुक्त भवति । यदि विवाहाग्निर्नष्ट. स्याच्चतो नष्टाहरणप्रायश्चित्तं कृत्वा परिचरेदिति । अथवा आत्मन पत्न्या वा समीपे कथ नित्य स्यात् नोभयोरन्यतर. स्थापयितव्य इति । अथवा होष्यद्धर्मस्योपलेपनादेर्निवृत्त्यर्थम् । तदपि हि क्वचग्रहणेन प्राप्नोति परिसमूहनादिवत् ॥ २ ॥

## यदि तूपशाम्येत्पत्न्युपवसेदित्येके ॥ ३ ॥

यदि प्रादुष्करणकाल उद्वायेत् तत. अन्यस्माद्धोमकालात्पत्न्युपवसेदित्येके । एकेग्रहणाद्यजमान उपवसेदित्येके । अयाश्चाग्न इत्येकामाहुति जुहुयादित्येके । कुत. । शास्त्रान्तरे दर्शनात् । अन्ये तु पूर्वसूत्रमेव व्याचख्यु° । नित्यशब्द उक्तार्थ. । नित्यमाचमनमिति यथा । अनुशब्द पश्चाद्वचन. । एतदुक्त भवति । यदि वैवाह्यो न गृहीतो दायविभागकाले गृह्यते । गृहीतोऽपि नष्टो वा द्वादशरात्रमतिक्रान्त । तत उक्तया क्रियया पश्चाद्गृहीतो भवतीति । तत्र विवाहाज्याहुतयो लाजाहुतयो गृहप्रवेशनीयाज्याहुतयश्च हृदयाञ्जन च भवति नान्यत् । कन्यासंस्कारत्वात् । होमद्वय चात्र समानतन्त्र स्यात् । लाजहोमोऽत्रापि पत्न्यञ्जलिना कार्य. । तद्धोमे तस्य साधनत्वेन दृष्टत्वात् । लाजावपन तु स्वयमेव करोति न भ्राता । दायविभागकाले गृह्यमाणे प्रयोगविशेषोऽन्वेष्यः ॥ ३ ॥

## तस्यामिहोत्रेण ॥ ४ ॥

तस्यग्रहण योगविभागार्थम्। तस्याग्निहोत्रेणैव विधिर्भवति नान्येन। तेन पाकयज्ञतन्त्र न भवति। तर्हि प्राशनादयोऽपि स्युरित्याशङ्कयाह॥ ४॥

प्रादुष्करणहोमकालौ व्याख्यातौ ॥ ५॥

प्रादुष्करण नामापराह्णे गार्हपत्य प्रज्वाल्येति। एव प्रातर्व्युष्टायामिति च। प्रदोषान्तो होमकाल. सङ्गवान्तः प्रातरिति। एतावेव भवतो नान्यदित्यर्थः॥ ५॥

हौम्य च मांसवर्ज्जं ॥ ६॥

हौम्य चाग्निहोत्रेण व्याख्यातम्। पयसा नित्यहोम इत्यादि पञ्च द्रव्याण्याम्नातानि मांसवर्ज्जमिति मांसप्रतिषेधाच्छास्त्रान्तरे दृष्टमपि हौम्य भवतीति गम्यते। 'पयो दधि यवागूश्च सर्पिरोदनतण्डुला.। सोमो मांस तथा तैलमापस्तानि दशैव तु॥' द्रवद्रव्याणि स्रुवेण जुहोति। कठिनानि तु पाणिना। येन द्रव्येण साय जुहोति तेनैव प्रात. प्रतिनिधिवर्ज्जम्॥ ६॥

काम तु व्रीहियवतिलैः ॥ ७॥

कामवचन पूर्वोक्ताभावे कथमेतेषां ग्रहण स्यादित्येवमर्थम्। व्रीह्यादयश्च प्रत्येक साधनानि। न मिश्राणि। तच्च न्यायतोऽवगन्तव्यम्॥ ७॥

अग्नये स्वाहेति साय जुहुयात्सूर्याय स्वाहेति प्रातस्तूष्णीं द्वितीये उभयत्र ॥ ८॥ ॥ ९॥

तूष्णी द्वितीये आहुती जुहोति। तूष्णीवचन प्रजापतिध्यानार्थम्। उभयत्र साय प्रातश्चेत्यर्थ। अग्नि परिसमूह्य परिस्तीर्य पर्युक्ष्य होमद्रव्यस्याऽग्निहोत्रवत्तूष्णी सस्कार कृत्वा ततोऽग्नये स्वाहेति जुहोति। ततः प्रजापतय इति चतुर्थ्यन्त श

न्दरूपं ध्यात्वा स्वाहेत्युपांशूक्त्वा द्वितीयाहुतिं जुहोति । ततः परिसमूहनपर्युक्षणे । एवं सायम् । प्रातर्होमे तु पूर्वमन्त्रस्थाने सूर्याय स्वाहा इति विशेषः ॥ ८ ॥ इति प्रथमे नवमी कण्डिका ॥ ९ ॥

## अथ पार्वणस्थालीपाकः ॥ १ ॥

उक्तोऽर्थः । पर्वणि भवः पार्वणः । स्थालीपाक इति कर्मनामधेयम् । दर्शपूर्णमासातिदेशात्काले सिद्धे पार्वणवचनं पाणिग्रहणादहरहः क्रियाशङ्कानिवृत्त्यर्थम् । विवाहादनन्तरं या पौर्णमासी तस्यामस्य प्रथमप्रारम्भः । प्रतिपद्यौपासनं हुत्वा ततः परिसमूहनादि प्रारभेत ॥ १ ॥

## तस्य दर्शपूर्णमासाभ्यामुपवासः ॥ २ ॥

तस्यग्रहणं नियमार्थम् । तस्यैवोपवासो यथा स्यात्तदतिदिष्टानां माभूदिति दर्शपूर्णमासाविति कर्मनामधेयम् । उपवास इत्येकभोजनम् । सर्पिर्मिश्रं दधिमिश्रं अक्षारलवणमशितव्यमित्यादयश्च नियमा लक्ष्यन्ते तस्य ताभ्यामुपवासो व्याख्यात इत्यर्थः ॥ २ ॥

## इध्माबर्हिषोश्च सन्नहनम् ॥ ३ ॥

अनयोश्च बन्धनं ताभ्यां व्याख्यातम् । 'इध्मः' पञ्चदशदारुकः' इति शान्तिकर्मणि साधयिष्यामः ॥ ३ ॥

## देवताश्चोपांशुयाजेन्द्रमहेन्द्रवर्जम् ॥ ४ ॥

देवताश्च ताभ्यां व्याख्याताः । उपांशुयाजादिवर्जम् । ते नाऽग्निरग्नीषोमौ पौर्णमास्याम् अग्निरिन्द्राग्नी अमावास्यायाम् । तदुक्तं शौनकेन—'पौर्णमासीं न समासार्थविवाहादनन्तरम् । ततः प्रक्रम्य कुर्वीत स्थालीपाकं तु कर्मसु ॥ तत्र यद्यप्यमावास्या विवाहानन्तरं यदा । तथापि पौर्णमास्यादिस्थालीपाक-

तत्र प्रमाणतो नातिदीर्घा नातिह्रस्वा' । परिमाणतश्चतुरङ्गुलय' षडङ्गुलयो वा न भवन्ति ॥ १ ॥

## यून ऋत्विजो वृणीत इत्येके ॥ २ ॥

अन्ये कर्मसमर्थानित्याहु' । पुनर्ऋत्विग्ग्रहण वरणसामान्यादनृत्विजामपि चमसाध्वर्युप्रभृतीनामेतद्गुणप्राप्तौ तन्निवृत्त्यर्थम् ॥ २ ॥

## ब्रह्माणमेव प्रथम वृणीतेऽथ होतारमथाध्वर्युमथोद्गातारम् ॥ ३ ॥

एवकारो नियमार्थ । कथ ब्रह्मण एव प्रथम वरण स्यादिति एव नियम कुर्वता होत्रादीनामनियत' क्रमो भवतीत्येतत्साधितम् ॥ ३ ॥

## सर्वान्वा येऽहीनैकाहैर्याजयन्ति ॥ ४ ॥

अहीनैकाहैर्याजयन्तीतिवचन शमितृनिवृत्त्यर्थम् । कथ वा प्राप्नुयात् । सामान्यवरणप्रसङ्गात् । 'आपो मे होत्राशसिन इति होत्रकान्' [ गृ० १।२३।९ ] इत्यत्र होत्रकशब्दो मुख्यवर्जितेषु वर्तते । 'होत्रका उपह्वयध्वमितीतरान्' इत्यत्र मुख्यवर्जितेषु होत्रकशब्दस्य दर्शनात् । ततश्च यथा प्रतिप्रस्थात्रादिषु वर्तते एव शमित्रादिष्वपि वर्तते होत्रकशब्द इति ॥ ४ ॥

## सदस्य सप्तदश कौषीतकिन समामनन्ति स कर्मणामुपद्रष्टा भवतीति तदुक्तमृग्भ्यां यमृत्विजो बहुधा कल्पयन्त इति ॥ ५ ॥

सदसि भवः सदस्य' । सप्तदशग्रहणमृत्विक्सधर्मा भवतीति ज्ञापनार्थम् । तेनोपस्थानप्रसर्पणादिसामान्यविहित सिद्धम् । अथवा नियमार्थम् । कथमेक एव सदस्य स्यादिति ।

शास्त्रान्तरेऽनेके सदस्या दृष्टास्तन्निवृत्त्यर्थम्। स च कर्मणामुपद्रष्टा भवतीत्येव कौषीतकिन आचार्या मन्यन्ते। ऋग्भ्यां चायमर्थ उक्त' ॥ ५ ॥

होतारमेव प्रथम वृणीते ॥ ६ ॥

एवकारोऽवधारणार्थः। होतारमेव न ब्रह्माणमिति। एव चेत्पूर्वेण विरोधः। न। यदा चतुर्णा वरण तदा ब्रह्मणः प्रथम वरण। यदा सर्वेषां तदा होतुः प्रथम वरणमिति ॥ ६ ॥

अग्निर्मे होता स मे होता होतार त्वाऽमु वृण इति होतार ॥ ७ ॥

अनेन होतार वृणीते। अमुमित्यस्य स्थाने होतुर्नाम वाच्यम्। पुनर्होतृग्रहण होतृवरणे आम्नातो मन्त्र उत्तरत्रानुवर्तते इति ज्ञापनार्थम् ॥ ७ ॥

चन्द्रमा मे ब्रह्मा स मे ब्रह्मा ब्रह्माण त्वाऽमु वृण इति ब्रह्माण ॥ ८ ॥

कृत्स्नपाठोऽनुवृत्तिमार्गप्रदर्शनार्थः ॥ ८ ॥

आदित्यो मेऽध्वर्युरित्यध्वर्युं। पर्जन्यो म उद्गातेत्युद्गातार। आपो मे होत्राशसिन इति होत्रकान्। रश्मयो मे चमसाध्वर्यव इति चमसाध्वर्यून्। आकाशो मे सदस्य इति सदस्य। स वृतो जपेत्। महन्मेऽवोचो भर्गो मेऽवोचो भगो मेऽवोचो यशो मेऽवोच' स्तोम मेऽवोच क्लृप्ति मेऽवोच-स्तृप्ति मेऽवोचो भक्ति मेऽवोच' सर्वं मेऽवोच इति ॥ ९ ॥

सग्रहण कथ वरणानन्तरमेव जप' स्यात् सर्वेषां वरणे कृते माभूदिति । वृतग्रहण ये ये वृतास्ते ते जपेयुरित्येवमर्थम् ॥९॥

जपित्वाऽग्निष्टे होता स ते होता होतार ते मानुष इति होता प्रतिजानीते ॥ १० ॥

जपित्वेति वचन 'तन्मामवतु तन्मा विशतु' इत्येतमपि जप जपित्वेत्येवमर्थम् । इहैव तर्हि कस्मान्न पठितः । अनित्यत्वात् । अनित्यत्व तु वक्ष्याम. ॥ १० ॥

चन्द्रमास्ते ब्रह्मा स ते ब्रह्मा ॥ ११ ॥

तेशब्दपाठः प्रतिवचनस्यानुवृत्तिमार्गप्रदर्शनार्थः ॥ ११ ॥

एवमितरे यथादेश तन्मामवतु तन्मा विशतु तेन भुक्षिषीयेति च याजयिष्यन् ॥ १२ ॥

जपतीति शेषः । यदा अग्न्याधेये चतुर्णा वरणं भवति तदा याजयितारस्ते न भवन्ति । यत्तु सोमाङ्ग वरण भवति तत्र याजयितारो भवन्ति । तेन सोमाङ्गवरण एवाय जपो नाग्न्याधेये । तेनायमनित्यः ॥ १२ ॥

याज्यलक्षणमाह—

न्यस्तमार्त्विज्यमकार्यम् ॥ १३ ॥

ऋत्विग्भिर्विवादेन त्यक्तमार्त्विज्यमकार्यम् ॥ १३ ॥

अहीनस्य नीचदक्षिणस्य ॥ १४ ॥

अल्पदक्षिणस्याहीनस्यार्त्विज्यमकार्यम् । ततो ज्ञायते एकाहस्याल्पदक्षिणस्यापि कार्यमिति । विज्ञायते च तस्मादाहुरीतव्यैव यज्ञे दक्षिणा भवत्यप्यल्पिकापीति ॥ १४ ॥

व्याधितस्यातुरस्य ॥ १५ ॥

व्याधितो ज्वरादिगृहीतः । आतुरस्तल्पगतः ॥ १५ ॥

यक्ष्मगृहीतस्य ॥ १६ ॥

यक्ष्मगृहीतः क्षयव्याधिगृहीत ॥ १६ ॥

अनुदेश्यभिशस्तस्य ॥ १७ ॥

सदेशिनाऽभिशस्तस्यैवमेके । अन्ये तु श्राद्धे प्रतिषिद्धस्येत्याहुः ॥ १७ ॥

क्षिप्रयोनेरिति चैतेषां ॥ १८ ॥

क्षिप्रयोनिर्नाम यस्य माता स्वभर्तरि नावतिष्ठते। अकार्यमिति सर्वत्र सबन्धनीयम्। इति चैतेषामिति वचनमन्येषाम प्येवमकाराणां न कार्यमित्येवमर्थम् ॥ १८ ॥

सोमप्रवाक परिपृच्छेत्को यज्ञ· क ऋत्विज· का दक्षिणेति ॥ १९ ॥

यः सोमं प्रथमं निवेदयति इदं त्वया अस्मिन्कार्यमिति स सोमप्रवाकस्तमेव पृच्छेत् ॥ १९ ॥

कल्याणै सह सप्रयोग· ॥ २० ॥

कल्याणे यज्ञे कार्यम्। कल्याणैर्ऋत्विग्भिः सह कार्यम्। दक्षिणा अपि कल्याण्यो यदि स्यु' तथा सति कार्यं नान्यथा ॥ २० ॥

न मांसमश्नीयुर्न स्त्रियमुपेयुराक्रतोरपवर्गात् २१

क्रत्वादिप्रभृत्या अपवर्गादेते नियमा भवन्ति। वरणप्रभृतीति कल्प्यमाने यदि मध्यमोपसदि वरण भवति तदा प्रागनियम' प्रसज्येत। तस्मात्क्रत्वादिप्रभृतीति युक्तम्। मध्यमोप सदि च शास्त्रान्तरे वरणं दृष्टम् ॥ २१ ॥

एतेनाग्ने ब्रह्मणा वावृधस्वेति दक्षिणाग्नावाज्याहुतिं हुत्वा यथार्थं प्रव्रजेत ॥ २२ ॥

ऋत्वन्ते स्वस्य दक्षिणाग्नौ एतेनाग्न इत्येतया आज्याहुति जुहोति। नैमित्तिकत्वाच्छास्त्रान्तरदर्शनाच्च मन्त्रलिङ्गाच्च । चक्रमेति हि भूतप्रत्यय'। तेन ऋत्वन्त इति सिद्धम्। यथार्थ मन्त्र जेदिति यथार्थमाचरेत्। अनियमो भवतीत्यर्थ । हुत्वाऽनियमो भवतीति ब्रुवन् समाप्तेऽपि क्रतौ होमपर्यन्ते नियमा भवन्तीति ज्ञापयति । आज्याहुतिवचन तन्त्रनिवृत्त्यर्थमिष्यते न परिस्तरणविकल्पार्थं ॥ २२ ॥

**एवमनाहिताग्निर्गृह्य इमामग्ने शरणि मीमृषो न इत्येतयर्चा ॥ २३ ॥　　॥ २३ ॥**

एतयेतिवचनमेतया जुहुयादेवेत्येवमर्थम् । तेनात्रापि तन्त्र न भवति । ऋचेतिवचनमकृतविवाहोऽप्यार्त्विज्य कृतवानेतया लौकिकाग्नौ जुहुयादित्येवमर्थम् । मधुपर्कमसङ्गादत्र ऋत्विग्वरणमाम्नातम् ॥ २३ ॥ इति प्रथमे त्रयोविंशतितमा कण्डिका ॥ २३ ॥

**ऋत्विजो वृत्वा मधुपर्कमाहरेत् ॥ १ ॥**

दद्यादित्यर्थः ॥ १ ॥

**स्नातकायोपस्थिताय ॥ २ ॥**

उपस्थिताय कृतसमावर्तनाय तस्मिन्नहनि गृहानभ्यागताय विवाहार्थिने च ॥ २ ॥

**राज्ञे च ॥ ३ ॥**

उपस्थिताय ॥ ३ ॥

**आचार्यश्वशुरपितृव्यमातुलानां च ॥ ४ ॥**

आचार्यादीनां पूर्वयोरसमासेन निर्देशस्त्वतुल्यत्वज्ञापनार्थः। तेन स्नातकाय तदहरेव देय.। यत्रैन पूजयिष्यन्तो भवन्तीति वचनात्। विवाहार्थिने च। राज्ञे त्वहरहरभ्यागताय।

आचार्यादीनां प्रति वत्सरोपितागतानां शाखान्तरदर्शनाद्विशेषो लब्धः ॥ ४ ॥

अप्रसिद्धत्वान्मधुपर्कस्वरूपमाह—

**दधनि मध्वानीय ॥ ५ ॥**

आनयतिरत्र सेचनकर्मा । आसिच्येत्यर्थ ॥ ५ ॥

**सर्पिर्वा मध्वलाभे ॥ ६ ॥**

इद वचन मध्वलाभे अयमेव प्रतिनिधिर्भवति नान्यस्तैलादिरित्येवमर्थम् ॥ ६ ॥

अल्पत्वाद्दातु कर्म पूर्वमाह—

**विष्टर पाद्यमर्घ्यमाचमनीय मधुपर्को गौरित्येतेषां त्रिस्त्रिरेकैकं वेदयन्ते ॥ ७ ॥**

विष्टर इत्यासनम् । पाद्यार्थमर्घ्यार्थमाचमनार्थ चोदक तथोक्तम् । एतेषामिति वचन एतेषामेव त्रिर्निवेदन यथा स्यात् भोजनस्य माभूदिति । भोजनं च देयमिति वक्ष्याम' । ऋत्विजां मधुपर्कदाने द्वेगती सभवत' पदार्थानुसमय काण्डानुसमय इति । तत्र पदार्थानुसमयो नाम सर्वेषां वरणक्रमेण विष्टर दत्वा तत. पाद्य ततोऽर्घ्यमिति । काण्डानुसमयो नाम एकस्यैव विष्टरादिगोनिवेदनान्त समाप्य ततोऽन्यस्य सर्व ततोऽन्यस्येति ॥ ७ ॥

अथ ग्रहीतु कर्माह—

**अह वर्ष्म सजातानां विद्युतामिव सूर्यः । इद तमधितिष्ठामि यो मा कश्चाभिदासतीत्युदगग्रे विष्टर उपविशेत् । आक्रम्य वा ॥ ८ ॥**

पद्भ्यामाक्रम्य वा विष्टरौ । एतयोर्विकल्प. ॥ ८ ॥

पादौ प्रक्षालापयीत दक्षिणमग्रे ब्राह्मणाय प्रयच्छेत् ॥ ९ ॥

पश्चात्सव्यं कुतः अग्रेवचनात् ॥ ९ ॥

सव्यं शूद्राय ॥ १० ॥

अग्रे प्रयच्छेत् । पश्चाद्दक्षिण । क्षत्रियवैश्यौ यदा प्रक्षालयितारौ तदा सव्यं वा पूर्वं दक्षिणं वा नास्ति नियम' ॥ १० ॥

प्रक्षालितपादोऽर्घ्यमञ्जलिना प्रतिगृह्य ॥ ११ ॥

प्रक्षालितपादग्रहणमानन्तर्यार्थम् । प्रक्षालनानन्तरमर्घ्यमेव गृह्णीयादिति । गन्धमाल्यादिसयुक्तमुदकमर्घ्यमित्युच्यते ॥ ११ ॥

अथाचमनीयेनान्वाचामति अमृतोपस्तरणमसीति ॥ १२ ॥

अथशब्दस्त्वानन्तर्यार्थ. । अर्घ्यानन्तरमाचमनीयमेवेति । तेन गन्धमाल्यादीनि परिसमाप्ते कर्मणि दातव्यानि । आचामतीत्युदक पिबतीत्यर्थः । अत्र शौचार्थमाचमन न भवति । कुतः । स्मृतेः 'मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च । नोच्छिष्टा भवन्ति' इति उत्तरत्र विधानाच्च 'आचान्तोदकाय गां' [ गृ० १ । २४ । २३ ] इति । एवमेके तदयुक्तम् । कुतः । सोमे अनुच्छिष्टविधानाद्यत्राचमन न प्रतिषेधति तत्र शौचार्थमाचमन भवतीति गम्यते । आचान्तोदकवचनमन्यार्थम् ॥ १२ ॥

मधुपर्कमाह्रियमाणमीक्षेत मित्रस्य त्वा चक्षुषा प्रतीक्ष इति ॥ १३ ॥

मधुपर्कमाह्रियमाणमानीयमानमीक्षेत मन्त्रेण ॥ १३ ॥

देवस्य त्वा सवितु· प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीति तदञ्जलिना प्रतिगृ-

ह्य मधुवाता ऋतायत इति तृचेनावेक्ष्यानामिकया चाङ्गुष्ठेन च त्रिः प्रदक्षिणमालोड्य वसवस्त्वा गायत्रेण छन्दसा भक्षयन्त्विति पुरस्तान्निमार्ष्टि १४

अनामिकेति केचिन्मध्यमामाहुः । कुतः । देशेनैव समाख्या न तु तस्या नाम विद्यते अङ्गुष्ठादिवत् । अन्ये तूपकनिष्ठिकामाहुः । कुतः । कनिष्ठिकया ह्यसौ व्यपदिश्यते न तु तस्या नामास्तीति । आगमाद्विशेषो ज्ञेयः । तृचेनावेक्ष्य तत सव्ये पाणौ कृत्वा प्रदक्षिणमालोड्य वसवस्त्वेति पुरस्तान्निमार्ष्टि अङ्गुलिगत लेपमपनयतीत्यर्थ ॥ १४ ॥

रुद्रास्त्वा त्रैष्टुभेन छन्दसा भक्षयन्त्विति दक्षिणत आदित्यास्त्वा जागतेन छन्दसा भक्षयन्त्विति पश्चात् विश्वे त्वा देवा आनुष्टुभेन छन्दसा भक्षयन्त्वित्युत्तरतः भूतेभ्यस्त्वेति मध्यात्रिरुद्गृह्य ॥ १५ ॥

मन्त्रेण मध्यात्रिरुद्गृह्य निमार्ष्टि ऊर्ध्वं त्रिरुत्क्षिपतीत्यर्थः । मन्त्रावृत्तिरुक्ता ॥ १५ ॥ ततो भूमौ निधाय पात्रम् ।

विराजो दोहोऽसीति प्रथमं प्राश्नीयात् विराजो दोहमशीयेति द्वितीय मयि दोहः पद्यायै विराज इति तृतीयं ॥ १६ ॥

सङ्ख्यावचनानि तु सर्वप्राशनपक्षे त्रिभिरेव मन्त्रैर्यथा सर्व प्राशित भवति तथा प्राश्नीयादित्येवमर्थानि । एव भाष्यकारः । अन्ये त्वन्यथा व्याचख्युः । भूतेभ्यस्त्वेति मध्यात्रिरुद्गृह्य विराजो दोहोऽसीति प्रथममुक्त्वाह प्राश्नीयात् । विराजो दोहमशीयेति द्वितीयमुक्त्वाहम् । मयि दोह इति तृतीयमुद्राहम् । तृतीयवचनं सर्वप्राशनपक्षे तृतीयेन प्राशनेन यथा सर्वं प्राशित

भवति तथा प्राश्नीयादित्येवमर्थम् । पद्यायै विराज इत्यत्र वि राज इति षष्ठी । कुत. । पूर्वयोस्तथा दृष्टत्वात् । पद्यायै इत्यपि चतुर्थी षष्ठ्यर्थे । तेन तत्सामानाधिकरण्ये सत्यपि षष्ठ्येव युक्ता कल्पयितुम् ॥ १६ ॥

न सर्वं ॥ १७ ॥

प्राश्नीयात् न सर्वं ॥ १७ ॥

न तृप्तिं गच्छेत् ॥ १८ ॥

तृप्तिं च न गच्छेत् ॥ १८ ॥

ब्राह्मणायोदङ्ङुच्छिष्टं प्रयच्छेत् अलाभेऽप्सु १९॥

ब्राह्मणायोच्छिष्टं उद्धृतादवशिष्टमुदङ्मुखो मधुपर्कं प्रयच्छेत् । ब्राह्मणालाभेऽप्सु निषिञ्चेत् ॥ १९ ॥

सर्वं वा ॥ २० ॥

प्राश्नीयात् ॥ २० ॥

अथाचमनीयेनान्वाचामति अमृतापिधानमसीति ॥ २१ ॥

यत्तत्पूर्वमाचमनीयं निवेदितं तेनान्वाचामति मन्त्रेण ॥ २१॥

सत्यं यशः श्रीर्मयि श्रीः श्रयतामिति द्वितीयं २२

द्वितीयग्रहणमाचमनीयप्राप्त्यर्थम् इतरथा मन्त्रस्योत्तरेण स म्बन्धः स्यात् ॥ २२ ॥

आचान्तोदकाय गां वेदयन्ते ॥ २३ ॥

आचान्तग्रहणं शौचार्थमाचमनं कृत्वा कर्माङ्गमप्याचमनं कुर्यादित्येवमर्थम् । उदकवचनमाचमनीयनिवृत्त्यर्थम् । तेनाचमने उदकान्तरं भवति ॥ २३ ॥

हतो मे पाप्मा पाप्मा मे हत इति जपित्वोङ्कुरुतेति कारयिष्यन् ॥ २४ ॥

इम मन्त्र जपित्वा ॐ कुरुतेति ब्रूयात् यदि कारयिष्यन्मारयिष्यन्भवति तदा च दाता आलभेत । तत्र देवताः माशुक्ता' ॥ २४ ॥

माता रुद्राणा दुहिता वसूनामिति जपित्वोमुत्सृजतेत्युत्स्रक्ष्यन् ॥ २५ ॥

यद्युत्स्रक्ष्यन् भवति तदा एतां जपित्वा ॐमुत्सृजतेति ब्रूयात् ॥ २५ ॥

नामांसो मधुपर्को भवति भवति ॥२६॥ ॥२४॥

इति गृह्यसूत्रे प्रथमोऽध्याय ॥ १ ॥

मधुपर्काङ्ग भोजनममास न भवतीत्यर्थ । कुतः । मांसस्य भोजनाङ्गत्वेन लोके प्रसिद्धत्वात् । अनेनाभ्युपायेन भोजनमप्यत्र विहित भवति । पशुकरणपक्षे तन्मांसेन भोजनम् । उत्सर्जनपक्षे मासान्तरेण । अध्यायान्तलक्षणार्थं द्विवचन मङ्गलार्थं च ॥ २६ ॥ इति प्रथमे चतुर्विंशतितमा कण्डिका ॥ २४ ॥

इत्याश्वलायनगृह्यसूत्रविवरणे *नारायणीयायां वृत्तौ* प्रथमोऽध्यायः ॥ १ ॥

अस्मिन्नध्याये स्थालीपाकादीनिमधुपर्कान्तानि कर्माण्युक्तानि ॥

---

द्वितीयोऽध्याय २

॥ ॐ ॥

## श्रावण्यां पौर्णमास्यां श्रवणाकर्म ॥ १ ॥

कर्तव्यमिति शेष' । सर्पबलिरित्य'याहार्यम् । श्रवणेन युक्ता श्रावणी । यदा पुनः पौर्णमासी श्रवणे न युक्ता तदापि कर्तव्यमेव । पौर्णमासीविशेषलक्षणार्थत्वान्नक्षत्रस्य । श्रवणाकर्मेति कर्मनामधेयम् ॥ १ ॥

## अक्षतसक्तूनां नव कलश पूरयित्वा दर्वीं च बलिहरणीं नवे शिक्ये निदधाति ॥ २ ॥

अक्षता नाम यवा तै कृता, सक्तवः । दर्वी वैकङ्कती स्रुगाकृति । बलिर्यया दर्व्या ह्रियते सा बलिहरणी । एतदुभय नवे शिक्ये निदधाति सर्पबल्यर्थम् ॥ २ ॥

अथ श्रवणाकर्मोच्यते—

## अक्षतधाना कृत्वा सर्पिषाऽर्धा अनक्ति ॥ ३ ॥

यवैर्धाना, कृत्वा असस्कृतेन घृतेनानक्ति । अर्धा धाना, पात्रान्तरे कृत्वा अन्याश्चार्धाधाना नानक्ति । एतावदह्नि कर्तव्यम् ॥ ३ ॥

## अस्तमिते स्थालीपाक श्रपयित्वैककपाल च पुरोडाश अग्ने नय सुपथा राये अस्मानिति चतसृभि प्रत्यृच हुत्वा पाणिनैककपाल अच्युताय भौमाय स्वाहेति ॥ ४ ॥

श्रपयित्वेतिवचन पुरोडाशस्योपासने धर्मवच्छ्रपणार्थम् । स्थालीपाकस्य तु तन्त्रमात्रस्यैवोपासने श्रपण सिध्यति । नन्व

न्यस्यापि सिध्यति। नियमार्थं तर्हि। तेन धानासक्तुलाजादीनां लौकिकाग्नौ सिद्धानामेवोपादानं भवति। एतावांस्तु तेषां संस्कारः। आज्यपर्यग्निकरणवेलायां तैः सहाज्यस्य पर्यग्निकरणं भवेत्। यदा आज्यस्योत्पवनमात्रमेव क्रियते तदा तेषां त्रिः प्रोक्षणं भवेत्। अवज्वलनं वा पूर्ववत्। एकस्मिन्कपाले संस्कृतः पुरोडाश एककपालः पुरोडाशः। तमुद्वास्याज्ये निमग्नं कुर्यात्। व्यक्तपृष्ठं वा कुर्यात्। चरुं चतसृभिः प्रत्यृचं हुत्वा दक्षिणेन पाणिना एककपालं जुहुयान्मन्त्रेण। उपस्तरणाभिघारणे तु सव्येन करोति। दक्षिणस्याऽन्यत्र व्यापृतत्वात्। दक्षिणाङ्गपरिभाषा च द्वयोः प्राप्तयोर्नियामिका न तु मापि केत्युक्तम्। अस्य सर्वहुतत्वादवदानधर्मो लुप्तः। सर्वहुतत्वं तु वक्ष्यामः ॥ ४ ॥

अविक्षुतः स्यादावि पृष्ठो वा ॥ ५ ॥

व्याख्यातमेतत् ॥ ५ ॥

मा नो अग्नेऽवसृजो अघायेत्येनमाशयेनाभिजुहोति ॥ ६ ॥

एनं पुरोडाशम्। एनमिति वचनमखण्डितोऽयं हुत इति ज्ञापनार्थम्। यस्मिन्नाज्ये पुरोडाशः शायितस्तदाशयं तेनाभिजुहोति। उपरिजुहोतीत्यर्थः। स्रुवेण ॥ ६ ॥

शन्नो भवन्तु वाजिनो हवेष्वित्युक्त्वा धाना अञ्जलिना ॥ ७ ॥

जुहुयादिति शेषः। हस्तद्वयसङ्घातोऽञ्जलिः। उपस्तरणावदानमत्यभिघारणान्यर्थादन्यः करोति ॥ ७ ॥

अमात्येभ्य इतरा दद्यात् ॥ ८ ॥

इतरा अनक्ता धानाः पुत्रादिभ्यो दद्यात्। ततो धानाभ्य

श्च गृहीत्वा स्विष्टकृत हुत्वा होमशेष समापयेत् ॥ ८ ॥

अथ सर्पबलिरुच्यते—

कलशात्सक्तूनां दर्वीं पूरयित्वा प्रागुपनिष्क्रम्य शुचौ देशेऽपोऽवनिनीय सर्पदेवजनेभ्यः स्वाहेति हुत्वा नमस्करोति। ये सर्पाः पार्थिवा ये आन्तरिक्ष्या ये दिव्या ये दिश्यास्तेभ्य इम बलिमहार्षं तेभ्य इम बलिमुपाकरोमीति ॥ ९ ॥

कलशश्च दर्वी च नवे शिक्ये स्थापिते। तत्र कलशाद्गृहीत्वा सक्तुभिर्दर्वीं पूरयित्वा तां गृहीत्वा गृहान्निष्क्रम्य गृहान्तिके अपि वाऽसमीपे देशे प्राच्यां दिशि शुचौ देशे अप आसिच्य मन्त्रेण सक्तूञ्जुहोति प्रक्षिपति । ततो नमस्करोति सहताभ्यां पाणिभ्यां मन्त्रेण। हुत्वेति वचनादग्नौ प्राप्ते तन्निवृत्त्यर्थं शुचौ देश इति वचनम् ॥ ९ ॥

प्रदक्षिण परीत्य पश्चाद्बलेरुपविश्य, सर्पोऽसि सर्पतां सर्पाणामधिपतिरस्यन्नेन मनुष्यांस्त्रायसेऽपूपेन सर्पान्यज्ञेन देवांस्त्वयि मा सन्त त्वयि सन्त सर्पा माहिंसिषुर्ध्रुवां ते परिददामीति ॥ १० ॥

ब्रूयादिति शेषः। प्रदक्षिण परीत्य बलिम्। पश्चादस्योपविश्याह मन्त्रम्। बलिग्रहण पश्चाच्छब्दस्य कालवाचित्वशङ्कानिवृत्त्यर्थम्। कालवाचित्वे सति सर्वाहुत्यन्तरमेव स्यात्। मन्त्रसञ्ज्ञकोऽय मन्त्र.। तथा चोक्तम्। 'इद कार्यमनेनेति न क्वचिद्दृश्यते विधि.। लिङ्गादेवेदमर्थत्व येषा ते मन्त्रसञ्ज्ञका.' इति। तस्मादुपांशुर्भवति। यथाहु.। 'गृह्यकर्मणि सर्वत्र जपानुमन्त्रणाभिमन्त्रणोपस्थानमन्त्रकरणमन्त्रा उपांशु प्रयोक्तव्याः' इति॥१०॥

ध्रुवासु ते ध्रुवासु त इत्यमात्यानुपूर्वम् ॥ ११ ॥

परिदद्यादिति शेष. । उत्तरत्र दृष्ट परिददामिशब्दोऽत्रापि सबध्यते । साकाङ्क्षत्वादस्य मन्त्रस्य । वीप्सावचनं मत्य मात्य परिदानस्य अभ्यास कार्यो न सर्वेषा नामानि निर्दिश्य सकृद्वक्तव्यमित्येवमर्थम् । पूर्व पुत्रान्निवेदयति । ध्रुव देवदत्त ते परिददामीति । ततोऽपत्ता दुहितृ' । ध्रुव सावित्री ते परिददामीति । ततो भार्या । ध्रु वसत्यवती ते परिददामीति ॥ ११ ॥

ध्रुव मां ते परिददामीत्यात्मानमन्तत' ॥ १२ ॥

परिदद्यादिति शेष' । उपदेशादेवान्तत इति सिद्धे अन्ततोवचन पूर्वेण सबन्धार्थम् । तेन पूर्वत्र परिददामीतिशब्दः सिद्ध' ॥ १२ ॥

नैनमन्तरा व्यवेयुरापरिदानात् ॥ १३ ॥

एन बलिमात्मान चान्तरा न व्यवेयुः । केचिदपि परिदानपर्यन्तम् । आपरिदानादितिवचनात् । पूर्वमन्त्रसाध्यक्रिया परिदानमिति गम्यते ॥ १३ ॥

सर्पदेवजनेभ्य स्वाहेति साय प्रातर्बलिं हरेदाप्रत्यवरोहणात् ॥ १४ ॥

कलशात्सक्तुना दर्वी पूरयित्वा शुचौ देशे मन्त्रेण बलिं हरेदाप्रत्यवरोहणात्साय प्रातश्च । आचतुर्दश्या आपौर्णमास्या वा यस्मिन्नहनि प्रत्यवरोहण करोति । मन्त्रोपदेशो नियमार्थ । मन्त्र एव भवति नान्यो विधिरिति । सक्तवस्तावन्न निवर्तन्ते । कलशपूरणस्यादृष्टार्थत्वप्रसङ्गात् । दर्वी च न निवर्तते । 'दर्वी च बलिहरणीमित्यत्र बलिहरणीम्' [सू०२।१।२] इति विशेषणस्येदमर्थत्वात् । शुचिदेशश्च न निवर्तते । बलिहरणस्य भूमिसाध्यत्वेन प्रसिद्धत्वात् । अन्यत्सर्वं निवर्तते १४

प्रसरुयाय हैके तावतो बलीस्तदहरेवोपहरन्ति॥१५॥
॥ १ ॥

श्रावणी प्रतिपदमारभ्य यस्मिन्नहनि प्रत्यवरोहण करोति मार्गशीर्षचतुर्दश्यां पौर्णमास्यां वा तस्मादर्वाचीनान्यहानि ज्ञानवृद्धिभ्या परिगणनया तेष्वह सु यावन्त• प्रात सायकालास्तावतो बलीस्तदहरेव दद्यादित्येके मन्यन्ते । हशब्दो ऽभिमतत्वज्ञापनार्थ सर्वत्र ॥ १५ ॥ ॥ इति द्वितीये प्रथमा कण्डिका ॥ १ ॥

## आश्वयुज्यामाश्वयुजीकर्म ॥ १ ॥

अश्वयुग्भ्यां युक्ता आश्वयुजी तस्यां पौर्णमास्यामिति व र्तते । आश्वयुजीकर्मसञ्ज्ञककर्म कुर्यात् । अयोगेऽपि पूर्ववत् ॥१॥

निवेशनमलकृत्य स्नाता शुचिवासस पशुपतये स्थालीपाक निरूप्य जुहुयु• पशुपतये शिवाय शकराय पृषातकाय स्वाहेति ॥ २ ॥

निवेशन गृह तत् प्रत्यवरोहणोक्तविधिनालकृत्य सर्वे गृह्या' स्नान्ति । स्नानवचन विशेषेण स्नानार्थम् । शौचार्थस्य स्मृतिप्राप्तत्वात् । शुचिवासोवचन शुक्लवस्त्रप्राप्त्यर्थ । स्थालीपाक जुहुयुरित्येतावतैव सिद्धे पशुपतये निरूप्येति वचन 'पशुपतये त्वा जुष्ट निर्वपामि' इत्येव निर्वापप्रोक्षणे कुर्यादित्ये वमर्थम् । एव ब्रुवता आदिष्टमन्त्रेषु पाकयज्ञेषु निर्वापप्रोक्षणे तूष्णी भवत इत्येतज्ज्ञापित भवति । स्थालीपाकमिति द्वितीया निर्देशेऽपि सर्वहुतत्वाशङ्का न कार्या । 'अथ दधिसक्तूञ्जुहोति' इत्यत्र हुत्वा दधिसक्तून्प्राश्येति शेषभावदर्शनात् । स्थालीपाकमिति स्थालीपाकस्यैकदेशमित्यर्थः । जुहुयुरिति बहु

वचन गृहिणा होमे क्रियमाणे पुत्रादयो गृह्याः समन्वारभे रन्निलेवमर्थम् ॥ २ ॥

पृषातकमञ्जलिना जुहुयात्, ऊन मे पूर्यतां पूर्ण मे मोपसदत् पृषातकाय स्वाहेति ॥ ३ ॥

'पयस्याज्ये निषिक्ते तु तत्पय॰स्यात्पृषातकम्' । उपस्तरणाभिघारणे अर्थादन्य' करोति। पृषातक स्रुवेणावद्यति। धानावदस्य सस्कार' । सर्वत्र द्रवद्रव्याणि स्रुवेणावद्यति । कठिनानि तु हस्तेन । स्वधितिना पशुम् । चरौ पृषातकाच स्वि ष्टकृतेऽवद्येत् । होमशेष समापयेत् । इतीदमाश्वयुजीकर्म ॥ ३॥

अथाग्रयणमुच्यते—

सजूर्ऋतुभिः सजूर्विधाभि सजूरिन्द्राग्निभ्यां स्वाहा सजूर्ऋतुभि सजूर्विधाभि सजूर्विश्वेभ्यो देवेभ्य स्वाहा । सजूर्ऋतुभि सजूर्विधाभि सजूर्द्यावापृथिवीभ्यां स्वाहेत्याहिताग्नेराग्रयण स्थालीपाक ॥ ४ ॥

अविशेषान्नाहिताग्नेरपि सिध्यति श्रवणाकर्मादिवत् आहिताग्निग्रहण किमर्थम् । अत्र ब्रूम । आहिताग्नेराग्रयणान्तरस्य विहितत्वादेतदाग्रयण न प्राप्नोति। तस्मान्नाहिताग्निग्रहणम् । अय चापत्काले द्रष्टव्य । इद चास्य त्रेतायां भवति नौपासने । तत्तु साधयिष्याम । शास्त्रान्तरे च दृश्यते । 'आग्रयणदेवताभ्य स्विष्टकृच्चतुर्थीभ्य ' इति । तस्मात्त्रेतायामिति सिद्धम् । इह तु विधान पाकयज्ञधर्मप्राप्त्यर्थम् ॥ ४ ॥

अनाहिताग्नेरपि शालाग्नौ ॥५॥　॥ २ ॥

अनाहिताग्नेरप्याग्रयण कार्यम्। तच्च शालाग्नौ भवति। शा-

त्ताग्निर्नौपासन । तर्हि शालाग्निग्रहणमपार्थकम् । सत्यम् । नियमार्थं तु तत् अनाहिताग्नेरेवौपासन इति । तेनाहिताग्नेर्त्रे तायामिति सिद्धम् । स्विष्टकृत हुत्वा चरोरेकदेश गृहीत्वा स व्ये पाणौ कृत्वा दक्षिणेनाभिमृशेत् 'प्रजापतये त्वा' इति म न्त्रेण । ततो 'भद्रान्न श्रेय.' इति प्राश्य तत आचम्य तत्रैवा सीनो नाभिमालभेत । 'अमोऽसि' इति । पत्नी हविःशेष प्रा श्नाति तूष्णीम् । होमशेष समापयेत् । एतत्प्राशनमाग्रयणद्वये ऽपि भवति । सौकर्यार्थमिदमत्र लिखितम् । इद चाग्रयण य दा वर्षस्य तृप्तः स्यात्तदा भवति । शरदीत्यर्थः । तथा च व चन 'शरदि व्रीहिभिर्यजेत' इति । तत्र च पर्वणि भवति । य वाग्रहण च न कार्यम् । श्यामाकैस्तु प्रस्तर कुर्यान्नाग्रयण दृष्ट त्वात् । अपि वात्र समानतन्त्र कुर्यात्सौम्यं चरु । अस्य च नामधेयेन होम. । आग्रयणस्थालीपाक इत्यत्र च विशेषणस मासः आग्रयण चासौ स्थालीपाकश्चेति । तत्र स्थालीपाकग्र हणस्येद प्रयोजनम् । अनाहिताग्नेः स्थालीपाक एव कार्यः । 'नाग्निहोत्री वै नानादयित्वा' इत्यय पक्षः कार्य इति ॥ ९ ॥

इति द्वितीये द्वितीया कण्डिका ॥ २ ॥

## मार्गशीर्ष्या प्रत्यवरोहण चतुर्दश्यां ॥ १ ॥

मृगशीर्षेण युक्ता मार्गशीर्षी पौर्णमास्यामिति वर्तते । सा मीप्ये चेय सप्तमी । यथा 'अथाग्नीषोमीयेण चरन्त्युत्तरवेद्या' इति । तेनायमर्थः । मार्गशीर्ष्याः पौर्णमास्याः समीपे या च तुर्दशी तस्या प्रत्यवरोहण नाम कर्म कर्तव्यमिति ॥ १ ॥

## पौर्णमास्या वा ॥ २ ॥

मार्गशीर्ष्यामिति वर्तते । अत्र त्वधिकरणे सप्तमी । तेन मा र्गशीर्ष्यां पौर्णमास्यां वेति पूर्वेण सह विकल्पः । भाष्यकार स्त्वित्थं विवृतवान् । मार्गशीर्षी पौर्णमासी यस्मिन्मासे सो

ऽय मार्गशीर्षी मास । 'साऽस्मिन् पौर्णमासीति सज्ञायाम्' [पा० ४ २ २१] इत्यण्प्रत्यय.। तस्मिन्मासे भवायां चतुर्दश्यां पौर्णमास्या वेति विकल्प इत्यर्थ । नन्वेव सति चतुर्दशीद्वित्वाद्विः कर्म प्राप्नोति। न। सकृदेव कार्य 'सकृत्कृते कृत. शास्त्रार्थः' इति न्यायाच्चतुर्दश्यामित्येकवचनाच्च पौर्णमास्या सह विकल्पाच्च। नन्वेवमपि शुक्ले कृष्णे वा स्यात्। न। पौर्णमासीसाहचर्याच्छुक्ल एवेति ॥ २ ॥

निवेशन पुनर्नवीकृत्य लेपनस्तरणोपस्तरणैरस्तमिते पायसस्य जुहुयुरपश्वेतपदा जहि पूर्वेण चापरेण च। सप्त च वारुणीरिमा सर्वाश्च राजबान्धवी स्वाहा न वै श्वेतस्याभ्यागारेऽहिर्जघान किंचन। श्वेताय वैदार्वाय नमः स्वाहेति ॥ ३ ॥

पुनरिति वचनादाश्वयुजीकर्मण्यपीत्थमेवाल्करणमिति गम्यते। नवीकृत्य नवमिव कृत्वेत्यर्थ । तच्च एतैरित्याह। लेपन कुड्यादीनाम्। स्तरण च तेषामेवाच्छादनम्। उपस्तरण भूमे' समीकरणम् । नवीकृत्येति वचनादपामार्गादीन्यप्युद्वास्यानि। एतावदहनि कर्तव्यम्। अथास्तमिते पायसस्यैक देश जुहुयुर्मन्त्राभ्याम्। 'तत्कालाश्चैव तद्गुणा' इति न्यायादुपलेपनाद्यस्तमित एव कार्यम्। बहुवचन पूर्ववत् ॥ ३ ॥

नात्र सौविष्टकृत् ॥ ४ ॥

सौविष्टकृदिति स्विष्टकृदित्यर्थः सर्वत्र। अत्र कर्मणि य. स्विष्टकृत्स न कार्य इत्यर्थः। असत्यत्रग्रहणे प्रधानान्तरमुच्यमानत्वात्प्रधानानन्तर स्विष्टकृन्न भवतीत्यर्थः स्यात् अन्ते च स्यादेव। ननु प्रधानानन्तर स्विष्टकृत' प्राप्तिरेव नास्ति । तथाहि। एताभ्यो देवताभ्यो हुत्वा सौविष्टकृत हुत्वा इत्यत्र

सौविष्टकृत हुत्वेत्येतदपार्थकम् । प्रधानानन्तर स्विष्टकृतः प्रकृतित प्राप्तत्वात् तत्कुर्वञ्ज्ञापयति अन्यत्र यान्यागन्तून्यङ्गानि विहितानि तत्र तानि कृत्वा पश्चात्स्विष्टकृत्कार्य इति । तर्हि प्रधानानन्तर स्विष्टकृत्प्रतिषेधाशङ्कानिवृत्त्यर्थमत्रग्रहण कुर्वञ्ज्ञापयति अत्र प्रधानानन्तरमन्ते वा स्विष्टकृद्भवतीति । तेनान्यत्र प्रधानानन्तर कर्मणोऽन्ते वा स्विष्टकृदिति विकल्प सिद्धः । अथवा सौविष्टकृत हुत्वेत्येतत्क्रमार्थम् । असति तु तस्मिन्प्रधानानन्तरमेव प्राशनादि स्यात् । अत्र च प्रधानानन्तर स्विष्टकृत' प्रकृतिप्राप्तत्वात्तस्य च प्रतिषेधे सति कर्मण्येव प्रतिषेधो भवति कालान्तरे प्राप्त्यभावात् । एव च सत्यत्रग्रहण कुर्वञ्ज्ञापयति अन्यत्र कर्मान्ते वा स्विष्टकृद्भवतीति ॥ ४ ॥

अभय न प्राजापत्येभ्यो भूयादित्यभिमीक्षमाणो जपति शिवो न सुमना भवेति हेमन्त मनसा ध्यायात् ॥ ५ ॥

अर्थध्यानस्य मुख्यत्वेऽपि शब्दध्यानमेव कार्यमित्येवमर्थं मनोग्रहणम् । मन्त्रमुक्त्वा मनसा हेमन्तशब्द समुद्धन्त ध्याये न्मन्त्रेण सामानाधिकरणत्वाय ॥ ५ ॥

पश्चादग्ने स्वस्तर स्वास्तीर्णस्तस्मिन्नुपविश्य स्योना पृथिवी भवेति जपित्वा सविशेत्सामात्य प्राक्शिरा उदङ्मुख ॥ ६ ॥

यस्मिस्तरणे स्वय शेते स स्वस्तरः स स्वास्तीर्णो भवति स्वयमेव तमास्तृणीयादित्यर्थ । तस्मिन्ग्रहणममात्यानामपि तत्रैव प्रापणार्थम् । सविशेदिति शयीतेत्यर्थ । अमात्याः पुत्रा दयो गृह्याः । उदङ्मुखवचन दक्षिणामुखनिवृत्त्यर्थम् ॥ ६ ॥

यथावकाशमितरे ॥ ७ ॥

अमात्या यथावकाशं प्राक्शिरस उदङ्मुखा, सन्निशेयुरित्यर्थः । उत्तरविवक्षार्थमिदम् ॥ ७ ॥

ज्यायान् ज्यायानानन्तर ॥ ८ ॥

यो यो यस्माद्यस्माद्वृद्धतरः स स गृहिणोऽनन्तरं सविशेत् । यथावकाशं वेति विकल्पः ॥ ८ ॥

मन्त्रविदो मन्त्राञ्जपेयु ॥ ९ ॥

स्योना पृथिवीत्यारभ्य स्वस्त्ययनपर्यन्तान्मन्त्रान् मन्त्रविदः सर्वे ब्रुयुर्गृहा ॥ ९ ॥

सहाय अतो देवा अवन्तु न इति त्रि· ॥ १० ॥

सहायेत्युत्थायेत्यर्थः । प्राङ्मुखास्त्रिर्ब्रूयुः ॥ १० ॥

एता दक्षिणामुखा प्रत्यङ्मुखा उदङ्मुखाश्चतुर्थं ॥ ११ ॥

एतामितिवचनं योगविभागार्थम् । इतरथा त्रिदिङ्मुखास्त्रिर्ब्रूयु चतुर्थं चतुर्थी त्रिदिङ्मुखा सकृदित्ययमर्थ स्यात् । योगविभागे सति प्राङ्मुखास्त्रि । त्रिदिङ्मुखा सकृदित्ययमर्थो लभ्यते । त्रिदिङ्मुखाश्च यथासङ्ख्येन त्रीन्पादान्ब्रूयु । चतुर्थवचनं निरधिकारनिवृत्त्यर्थम् । सर्वे प्रायश्चित्तादि समापयेयु । ततो यथाशय शेरते ॥ ११ ॥

सहाय सौर्याणि स्वस्त्ययनानि च जपित्वाऽन्न संस्कृत्य ब्राह्मणान्भोजयित्वा स्वस्त्ययनं वाचयीत ॥ १२ ॥ ॥ ३ ॥

सहाय सङ्गत्येत्यर्थः । इदानीं सङ्गतिविधानात् पूर्वं यथाशय्य शेरत इति गम्यते । समागम्य उदित आदित्ये सौर्याणि

स्वस्त्ययनानि च जपेयु । सूर्यो नो दिवः । उदुत्य जातवेद समिति नव । चित्र देवाना । नमो मित्रस्य इत्येतेषां सौर्य-सञ्ज्ञा कृता । स्वस्तिशब्दवन्ति स्वस्त्ययनानि आ नो भद्राः स्वस्ति नो मिमीतां परावतो ये दिधिषन्त आग्यमित्येतानि। अन्नसंस्कारवचन चरुशेषाद्ब्राह्मणभोजननिवृत्त्यर्थम् । तेनानु प्रवचने चरुशेषादिति सिद्धम् ॥ १२ ॥ इति द्वितीये तृतीया कण्डिका ॥ ० ॥

## हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका ॥ १ ॥

हेमन्तशिशिरावृतू । अपरपक्षा कृष्णपक्षाः । अष्टका इति कर्मनाम । एतदुक्त भवति । मार्गशीर्षादिचतुर्षु मासेषु ये कृष्णपक्षाश्चत्वारस्तेषु याश्चतस्रोऽष्टम्यस्तास्वष्टका' कार्या इति । ऋतुद्वयमध्ये यदि मलमास आगच्छति तस्मिन्मासे न कर्तव्य इत्येवमर्थ चतुर्ग्रहणम् । अपि च बहुवचनस्य त्रिष्वेव चरितार्थत्वाच्छास्त्रान्तरदर्शनाच्च ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टका इति तिस्र एव स्युस्तन्निवृत्त्यर्थं चतुर्ग्रहणम् ॥ १ ॥

## एकस्यां वा ॥ २ ॥

एकस्यामेवाष्टम्यामष्टका॰ कार्याश्चतसृषु वेति विकल्प॰ ॥२॥

## पूर्वेद्यु पितृभ्यो दद्यात् ॥ ३ ॥

सप्तम्यामित्यर्थ । पितृशब्देन पितृपितामहप्रपितामहा उच्यन्ते । 'अन्वष्टक्ये पितृभ्यो दद्याद्' इत्यस्या चोदनायां पिण्डदान दृष्टम् । अतश्चोदनासामान्यादिहापि परिगृह्यते । ब्राह्मणभोजन च कार्यमिति वक्ष्याम' । तेन पूर्वेद्युः पितृभ्य॰ पिण्डान्भोजन च दद्यादित्यर्थ॰ । पिण्डदाने इतिकर्तव्यतापेक्षास्ति । इह च तस्या अनाम्नानात्प्रकरणान्तरविहितोऽपि

पिण्डपितृयज्ञकल्पः परिगृह्यते । शक्यते चासौ ग्रहीतुं शास्त्रस-वन्धकरणात् । अपि चान्वष्टक्ये पिण्डपितृयज्ञकल्पो दृष्टः । स चोदनासामान्यादिहापि भवति । अत्रैव तर्हि पिण्डपितृयज्ञकल्पेनेति कस्मान्नोक्तम् । स्त्रीभ्यश्चेत्यनाधिकारार्थं तत्रोक्तम् । स च कल्पोऽन्याग्नौकरणे पाकयज्ञतन्त्रस्य बाधको भवति एककार्यत्वात् । भोजनं तु पार्वणवद्भवति । भोजनेऽपि तन्त्रस्यापेक्षितत्वात् । तच्च भोजनं पैतृकमेवेति कृत्वा पार्वणमेव तत्र परिगृह्यते तस्य पैतृकत्वात् ॥ ३ ॥

तत्र विशेषमाह—

## ओदनं कृसरं पायसं ॥ ४ ॥

पिण्डपितृयज्ञकल्पो भवतीत्युक्तम् । तत्र च नित्येऽग्नौ चरुश्रपणमस्ति । तस्य स्थाने एतानि त्रीणि नित्येऽग्नौ श्रपयेत् । 'ओदनस्तु प्रसिद्धः स्यात्पायसः पयसा शृतः । ओदनस्तिलमिश्रस्तु कृसरः परिकीर्तितः । तिलकल्कान्विनिक्षिप्य शृतो वा कृसरो भवेत्' ॥ ४ ॥

## चतुःशरावस्य वाऽपूपान् ॥ ५ ॥

चतुःशरावपरिमितस्य वा धान्यस्य पेषणं कृत्वा अपूपाञ्श्रपयेत् । अपूपाः पिष्टमयाः । बहुसाधनसाध्यत्वादपूपानां स्त्रीकर्तृकत्वाच्च नित्येऽग्नौ श्रपणं न संभवतीति गृहसिद्धानामेवोपादानमिच्छन्ति । वाशब्दो विकल्पार्थः । पूर्वाणि वा त्रीणि इदं वैकं द्रव्यमिति । भोजने तु नायं द्रव्यनियमोऽपि तु होम एव । 'अष्टका हि चतस्रः स्युः पूर्वोहानि तथैव च । द्रव्यत्रयत्वादेकत्वान्न यथासंख्यसंभवः ॥ प्रत्यष्टकं हि पूर्वेद्युस्त्रीणि द्रव्याण्यथापि वा । अपूपद्रव्यमेकं वा नान्या व्याख्यानकल्पना' ॥ ५ ॥

उदीरतामवर उत्परास इत्यष्टाभिर्हुत्वा यावती-
भिर्वा कामयीत ॥ ६ ॥

यावतीभिर्वाऽधिकाभिरेवजातीयकाभिः पितृलिङ्गकाभि' कामयीत कामयेत तावतीभिर्जुहुयात् । एतदुक्त भवति । पिण्डपितृयज्ञनि ानेने माायाना ात कुर्यात् । चरुश्रपणे विशेष उक्त । ततो ब्राह्मणपञ्चशौचाद्याञ्छादनप्रदानपर्यन्तं पार्वणवत्कृत्वा ओदनादिभ्यस्त्रिभ्योऽन्नमुद्धृत्य घृताक्त कृत्वानुज्ञा प्य अग्नौ करणमन्त्रयो' स्थाने उदीरतामवर उत्परास इत्यष्टाभिश्चतुर्दशभिर्वा हुत्वा मेक्षणमनुप्रहृत्य ब्राह्मणेभ्योऽन्नदानादिशेषनिवेदनान्त पार्वणवत्कृत्वा भुक्तवत्सु पिण्डपितृयज्ञवन्निनयनादिपात्रोत्सर्गा त कृत्वा ततः श्राद्धशेष समापयेदिति ॥ ६ ॥

अथ श्वोभूतेऽष्टका पशुना स्थालीपाकेन च ॥७॥

अथेत्यानन्तर्यार्थे । श्वोभूतेऽष्टम्यामित्यर्थः । या अष्टका कार्या इत्युक्तास्ता. श्वोभूते पशुना स्थालीपाकेन च कार्या इत्यर्थ । अथाष्टका इत्येतावत्युच्यमाने अथशब्दसवन्धात्पूर्वेद्युश्चाष्टका' कार्या इत्याशङ्का स्यात् तस्माच्छ्वोभूतग्रहणम् । पश्वङ्गभूतस्य स्थालीपाकस्याविधेयत्वात्स्थालीपाकान्तरमित्यवगम्यते । चशब्दश्चाय वाशब्दस्य स्थाने द्रष्टव्य । तेन पशुना वा स्थालीपाकेन वेत्यर्थ. । शास्त्रान्तरे च स्पष्टं वचनमस्ति 'पशोरभावे स्थालीपाक प्रवर्तते' इति ॥ ७ ॥

अप्यनडुहो यवसमाहरेत् ॥ ८ ॥

अपिशब्दो विकल्पार्थ. । एतदुक्त भवति । पशु. कार्यस्तस्यासभवे स्थालीपाकस्तस्याप्यसभवेऽनडुहो यवस प्रयच्छेदिति । शकटवहनसमर्थो बलीवर्दोऽनड्वान् ॥ ८ ॥

अग्निना वा कक्षमुपोषेत् ॥ ९ ॥

त्रयस्याप्यसम्भवेऽग्निना कक्ष दहेत् ॥ ९ ॥

एष मेऽष्टकेति ॥ १० ॥

यवसदाने कक्षदहने चैव मनसा यायेदित्यर्थ ॥ १० ॥

न त्वेवानष्टक स्यात् ॥ ११ ॥

इदमस्य प्रयोजनम् । चत्वार' पक्षा उक्तास्तत्र पूर्वालाभे उत्तरोत्तर प्रवर्तेत इति । एवमप्यष्टका कार्या न त्वेवानष्टकः स्यादित्यर्थः । अथ वा शास्त्रान्तरे यानि पक्षान्तराण्युक्तानि अपि वा अनूचानेभ्य उदकुम्भमाहरेत् । अपि वा श्राद्ध मन्त्रानधीयीतेति । तथा वा कुर्यात् । नत्वेवानष्टक स्यादित्यर्थ ॥ ११ ॥

तां हैके वैश्वदेवीं ब्रुवत आग्नेयीमेके सौर्यामेके प्राजापत्यामेके रात्रिदेवतामेके नक्षत्रदेवतामेके ऋतुदेवतामेके पितृदेवतामेके पशुदेवतामेके ॥ १२ ॥

एतेऽष्टौ देवताविकल्पा । तत्र यदा आग्नेय्यष्टका क्रियते तदा पशुस्थालीपाकापदानानि त्रीण्यपि अग्नये स्वाहेति जुहुयात् । केवलस्थालीपाकमप्यनेनैव जुहुयात् । एवमितरेष्वपि नेयम् । तत्रानाद्यानां पक्षाणामयुक्तत्वज्ञापनार्थमाद्ये हशब्द पठितवान् । मन्त्रास्तावदष्टकार्थत्वेन गृह्यस्मृतिपारम्पर्येण स्मर्यन्ते । स्मृतिश्च प्रमाणम् । एवमष्टकार्थत्वेन प्रमाणावगतेषु मन्त्रेषु तान्परित्यज्याग्यादीनां नामधेयेन होम इत्येतदुक्त वक्तुमिति हृदि कृत्वा हशब्द पठितवान् । तस्मात्सर्वदा मन्त्रैरेव होम कार्यः न कदाचिदपि नामधेयेनेति सिद्धम् । एतमेव पक्षमुत्तरत्रापि समर्थयते । वैश्वदेवीं ब्रुवत इति बहुदेवत्यां ब्रुवत इति ।

अयमर्थः। या या मन्त्रेषु लिङ्गिनी सा सा सर्वत्र देवता भवति। नवाग्न्यादय एकैकैव देवता भवतीत्यर्थः। बहुदेवत्यो हि वैश्वदेवशब्दः श्रूयते। 'यथा प्रभुर्क्रतु देवी मनीषेति वैश्वदेव' इति। उक्तं च नैरुक्तैः 'यच्च किंचिद्बहुदेवत्यं तद्वैश्वदेवानां स्थाने युज्यते' इति। प्रकारान्तरेणास्माभिर्भाष्यकारमतमेवानुसृतमिति निरवद्यम्। अपि चैव व्याख्या। आग्नेयीमेके। तेषामयमभिप्रायः। सत्यम्। अष्टकार्थत्वेन मन्त्राणां स्मरणात्स वेदा मन्त्रैरेव होमः कार्यः तथाप्याग्नेयी भवति। अग्निरेव सर्वेषु मन्त्रेषूद्देश्यो भवतीत्यर्थः। यानि तेषु देवतान्तरवाचीनि पदानि तानि कथंचिद्गौण्या लक्षणया वा योगेन वाग्निवाचीनि भवन्ति। यथा प्रयाजानामाग्नेयत्वे समिदादिशब्दास्तस्यैव कथंचिद्वाचकाः एव मन्त्रा अपीति। एवमुत्तरेष्वपि पक्षेषु योज्यम्। एवं देवताविप्रतिपत्तौ सत्यां हशब्दं प्रयुक्तवान्। बहुदेवत्ये त्वयमेव पक्षो युक्तः। लक्षणाद्याश्रयणे कारणाभावादिति ज्ञापयितुम्। प्रयाजेषु तु कारणं निरुक्ताद्विज्ञेयम्॥ १२॥

पशुकल्पेन पशुं सञ्ज्ञप्य प्रोक्षणोपाकरणवर्जं वपामुत्खिद्य जुहुयात्। वह वपां जातवेदः पितृभ्यो यत्रैनान्वेत्थ निहिताः पराके मेदसः कुल्या उपैनांस्स्रवन्तु सत्या एता आशिषः सन्तु सर्वाः स्वाहेति॥ १३॥

पशुकल्पेनेतिवचनं प्रोक्षणप्रतिषेधः पाशुकस्यैव प्रोक्षणस्य भवति न पश्वङ्गभूतस्थालीपाकप्रोक्षणस्येत्येवमर्थम्। सञ्ज्ञप्येत्यनुवादः। उत्खिद्येति वचनमुत्खिद्य सर्वदाऽनयैव वपां जुहुयादित्येवमर्थम्। तेनाग्न्यादिनामधेयेन होम इत्याद्याः पक्षा निरस्ता भवन्ति॥ १३॥

अथावदानानां स्थालीपाकस्य च अग्ने नय सुपथा राये अस्मानिति द्वे । ग्रीष्मो हेमन्त ऋतव शिवा नो वर्षा शिवा अभया शरन्न । संवत्सरोऽधिपति प्राणदो नोऽहोरात्रे कृणुतां दीर्घमायु स्वाहा । शान्ता पृथिवी शिवमन्तरिक्ष द्यौर्नो देव्यभय नो अस्तु । शिवा दिश· प्रदिश उद्दिशो न आपो विद्युत परिपान्तु सर्वत स्वाहा । आपो मरीची· प्रवहन्तु नो धियो धाता समुद्रो वहन्तु पाप । भूत भविष्यदभय विश्वमस्तु मे ब्रह्माऽधिगुप्त· स्वाराक्षराणि स्वाहा । विश्व आदित्या वसवश्च देवा रुद्रो गोप्तारो मरुत सदन्तु । ऊर्ज प्रजाममृत पिबमान· प्रजापतिर्मयि परमेष्ठी दधातु स्वाहा । प्रजापते न त्वदेतान्यन्य ॥ १४ ॥

स्थालीपाकशब्देनात्र द्वय गृह्यते । एकवचन जात्यभिप्रायम् । तेनायमर्थ· । पश्वङ्गस्थालीपाकस्यावदानाना च स्थालीपाकान्तरस्य च एते सप्त होममन्त्रा भवन्तीति ॥ १४ ॥

सौविष्टकृत्यष्टमी ॥ १५ ॥

अष्टमीग्रहण सर्वदा त्रिष्वपीयमाहुतिरष्टमी भवतीत्येवमर्थम् । तेन मन्त्रैरेव होमो न कदाचिन्नामधेयेनेति सिद्धम् । अपि च यदा पश्वङ्गभूतस्थालीपाक· पृथक् हूयते तदा स्विष्टकृदपि पृथक्कार्य इत्येतत्प्रदर्शित भवति । सर्वत्र च पृथग्घोमे स्विष्टकृदपि पृथक्कार्यः। पृथग्घोमे हि अवदानानां सप्त स्थालीपाकस्य च सप्त । तत सौविष्टकृती पञ्चदशी स्यात् । सहपक्षे

त्वष्टमी भवति । एव च पृथग्घोमनिवृत्त्यर्थमष्टमीग्रहण वेदित व्यम् ॥ १९ ॥

ब्राह्मणान्भोजयेदित्युक्तम् ॥ १६ ॥ ॥ ४ ॥

ब्राह्मणान्भोजयित्वा स्वस्त्ययनं वाचयीतेति यदुक्त तदि हापि कार्यमित्यर्थ । एतदुक्त भवति । होम समाप्य ब्राह्मण पच्छौचाद्याच्छादनान्त कृत्वा भोजनार्थादन्नादुद्धृत्य घृताक्त कृत्वा पाणौ होम कृत्वा भुक्तवत्स्वनाचान्तेषु पिण्डान्दत्वा स्वस्त्ययन वाचयित्वा श्राद्धशेष समापयेदिति । अथवा ब्राह्मणान्भोजयेदिदमनन्तरे कर्मणीत्युक्तम् । यच्चोक्त पूर्वेद्यु. कर्म तत्र च भोजयेदित्युक्त द्रष्टव्यमित्यर्थ. । इतिशब्दोऽन्नभोजनप रामर्शी । इदमष्टम्यां भोजन श्राद्धमित्युपदेशः । शास्त्रान्तरे च दृश्यते तस्माच्छ्राद्धमिति सिद्धम् ॥ १६ ॥ इति द्वितीये चतुर्थी कण्डिका ॥ ४ ॥

अपरेद्युरन्वष्टक्य ॥ १ ॥

अपरस्मिन्नहनि नवम्यामन्वष्टक्य नाम कर्म कार्यमित्यर्थः ॥ १ ॥

तस्यैव मांसस्य प्रकल्प्य दक्षिणाप्रवणेऽग्निमुपसमाधाय परिश्रित्योत्तरत परिश्रितस्य द्वार कृत्वा समूल बर्हिस्त्रिरपसलैरविधून्वन्परिस्तीर्य हवींष्यासादयेदोदन कृसर पायस दधिमन्थान्मधुमन्थांश्च ॥ २ ॥

योऽष्टम्या पशु' कृतस्तस्यैव मांस ब्राह्मणभोजनार्थ प्रकल्प्य । सस्कृत्येत्यर्थ । भोजनार्थत्व शास्त्रान्तरादवगतम् । दक्षिणाप्रवण इति प्राक्प्रवणनिवृत्त्यर्थम् । उपसमाधायेति व्याख्यातम् । अग्नितिरस्करण्यादिभि परिश्रित्योत्तरतो द्वार करोति । पुनः परिश्रितस्येतिवचन परिश्रयणस्यानित्यत्वज्ञाप

नार्थम् । अत्रापि पिण्डपितृयज्ञकल्पोऽस्ति तत्र विशेषमाह । उभौ परिस्तीर्येत्यस्मिन्काले समूलं बर्हिर्गृहीत्वा अपसलैरप्र दक्षिणमविधून्वन्नकम्पयन्नि' परिस्तृणीयात् । आसादयेदभिघार्य स्थालीपाकमित्यस्मिन्काले एतानि पश्चासादयेत् । एषां नित्ये श्रपणं कार्यं । गृह्यकर्मणि सर्वत्र चरूणां नित्येऽग्नावेव श्रपणं कार्यं न लौकिके । अन्यत्र प्रतिषेधात् । श्रपयित्वैककपाल चेत्यत्र श्रपयित्वेतिवचनस्य चरुवर्जितानां धानादीनां नित्याग्निश्रपणनिषेधपरत्वेनापि संभवात् । 'सक्तवो दधिमिश्रास्तु दधिमन्थाः प्रकीर्तिताः । मधुमन्था प्रकीर्त्यन्ते मधुमिश्रास्तु सक्तव.' ॥ उल्लेखनकाले द्वे लेखे लिखेत् । उभे च सकृदाच्छिन्नैरवस्तृणीयात् ॥ २ ॥

## पिण्डपितृयज्ञे कल्पेन ॥ ३ ॥

इदं कर्म पिण्डपितृयज्ञविधानेन कार्यमित्यर्थं । 'अग्निप्रणयन पात्र सोमायेत्यादिमन्त्रकौ । उपस्थान प्रवहण निनयाद्यतिदिश्यते' ॥ ३ ॥

## हुत्वा मधुमन्थवर्जं पितृभ्यो दद्यात् ॥ ४ ॥

इध्माधानान्तं कृत्वा ब्राह्मणपच्छौचाद्याच्छादनान्तं कृत्वा ओदनादिभ्यश्चतुर्भ्योऽन्नमुद्धृत्य मधुमन्थवर्जं घृताक्तमनुज्ञाप्याग्नावाहुतिद्वयं हुत्वा मेक्षणमनुप्रहृत्य शेषनिवेदनान्तं कृत्वा पितृभ्यः पिण्डान्निपृणीयादित्यर्थं । पिण्डदाने मधुमन्था अपि ग्राह्या' ॥ ४ ॥

## स्त्रीभ्यश्च सुरा चाचाममित्यधिकं ॥ ५ ॥

मात्रे पितामह्यै प्रपितामह्यै च पिण्डान्निपृणीयात् । तत्र चोदनादिपश्चभ्यः सुरा चाचामं चाधिकं भवतीत्यर्थं । पित्रादित्रयाणामेव पिण्डपितृयज्ञस्य दृष्टत्वात्तद्विधानं स्त्रीणां न प्रा-

प्रोतीति कृत्वा पिण्डपितृयज्ञकल्पेनेत्येतदत्रानुवर्तनीयम् । 'ओदनाग्रद्रव प्राहुराचाम हि मनीषिणः। गौडी मा वी च पैष्टी च सुरा तु त्रिविधा स्मृता' ॥ अधिकवचन पश्चानामवाधनार्थम् ॥ ५ ॥

## कर्षूष्वेके द्वयो पदसु वा ॥ ६ ॥

द्वयोर्लेखयोरुभयेपा पिण्डनिपरणमुक्तम् । कर्ष्वो नामावटा. । कर्ष्वौ च कर्प्वश्च कर्ष्वः। तास्वेके इच्छन्ति । यदा द्वे कर्ष्वौ तदा आयते भवतः । यदा षद् तदा परिमण्डलाः । द्वयोरिति वचनात्कर्ष्वावित्येकशेषो लब्ध ॥ ६ ॥

## पूर्वासु पितृभ्यो दद्यात् ॥ ७ ॥

पूर्वा च लेखा पूर्वा च कर्षूः पूर्वाश्च कर्ष्व॰ ताः पूर्वाः । एतदुक्त भवति । द्विलेखाद्विकर्षूषट्कर्षूपक्षेषु पूर्वस्यां लेखायां पूर्वस्या कर्ष्वां पूर्वासु कर्षूषु पितृभ्यो निपृणीयादिति ॥ ७ ॥

## अपरासु स्त्रीभ्य॰ ॥ ८ ॥

पूर्ववदेकशेषः । अत्र किंचिद्वक्तव्यमस्ति । द्वे लेखे इत्युक्तम् । पितृषु च स्त्रीषु च पृथक्पृथक् नवावरा अयुजो वा ब्राह्मणा भवन्ति । प्रकृतौ समर्थनिगमेषु यजुर्निगदेषु विकृतावूह उक्तः । तेन स्त्रीपात्रेषु तिलावपने तिलोसीति मन्त्रे पितृशब्दस्योहो न कार्य' प्रकृतावसमर्थत्वात् । पार्वण हि तस्य प्रकृतिः । तत्र च पित्रादयस्त्रयोऽभिधातुमभिप्रेता' न च पितृशब्दस्त्रीन्वक्तु समर्थः। अथोच्यते । तत्रापि पितृपात्रमेवास्य प्रकृतिः उत्तरे विकृती । पितृपात्रे च पितृशब्द समर्थ । विभक्तिमात्र त्वसमर्थम् । तेनोत्तरयो पात्रयो पितृशब्दस्य स्थाने पितामहमपितामहशब्दौ बहुवचनान्तौ वक्तव्याविति । एतदप्युक्तम् । समानप्रकरणे प्रकृतिविकृतिभावो नास्तीति ज्ञापितमेत दाष्यकारेण

'रात्र्यापदेनेति तु प्रणयेत्' इत्यत्र । तेन त्रिष्वपि पितृशब्द एव प्रयोज्य इति सिद्धम् । यथा तत्र कथचिद्गौण्या लक्षणया वान्यथा वा त्रीनाह तथैवात्रापि मातृरभिदध्यात् । तेनोहो न कार्य । अथ तत्रोत्तरयो पात्रयोरूहोऽभ्युपगम्यते । तर्हि 'शुन्धन्ता पितर.' इत्यत्र त्रयाणां वचनमपार्थकं स्यात् । तस्मात्पितृशब्द एव सर्वदा प्रयोज्य इति सिद्धम् । 'शुन्धन्ता पितर' इत्यत्र तु विभक्तिमात्र समर्थम् । प्रकृतिस्तु समर्थैव । तेन तस्या ऊह कार्य. । 'शुन्धतां मातर शुन्धन्तां पितामह' शुन्धन्तां प्रपितामह इत्येतत्तेऽसौ ये च त्वा' इत्यत्र यदि द्वे मातरौ स्याता पितामहौ प्रपितामहौ वा तदा असावित्यत्र द्वयोरपि नामनी ब्रूयात् । यदा बहवस्तदा बह्वीनामपि नामानि ब्रूयात् । तेशब्दस्य स्थाने द्वे मातरौ चेद्वामित्यूह. । बहवश्चेद्व इत्यूह. । येशब्दस्य केचिदूहेन स्त्रीलिङ्ग कुर्वन्ति तद्विचार्यम् । एतत्ते तत ये च त्वामत्रान्वित्यस्यायमर्थ. । हे तत एतत्पिण्डरूपमन्न तुभ्य ये चान्येऽत्र त्वामनु यन्ति तेभ्यश्चेत्यर्थः । अनुयायिनश्च यदि स्त्रिय एव स्यु. तदोहो युज्यते । यदि पुमास एव पुमासश्च स्त्रियश्च वा तदा न युज्यते 'पुमान्स्त्रिया' इति पुस एकशेषात् । आचार्येणाप्युक्तम् । 'पुवन्मिथुने' इति [श्रौ० ] । 'अनुयायिनश्च पुमासश्च स्त्रियश्चेति प्रतिभाति' इति बौधायनवचनात् । इत्थ हि तेन पिण्डदाने पठितो मन्त्रः एतत्ते ततासौ ये ते मातामहा ये त आचार्या ये ते सखायो ये ते गुरवो ये ते ज्ञातयो ये तेऽमात्या ये तेऽन्तेवासिनस्तेभ्यश्चैतत्ताभ्यश्च स्वधा नम इति तेनोहो न कार्यः । आपस्तम्बेन तु 'एतत्ते मातरसौ याश्च त्वामत्रानु' इति मन्त्रः पठित इति कृत्वा केचिदूह कुर्वन्ति तच्चिन्त्यम् । स्त्रीद्वित्वे युवामत्रानु बहुत्वे युष्मानत्रान्विति । अत्र पितर. अमीमदन्त पितर इत्यत्र

च पितृशब्दस्योहो न कार्य. । प्रकृतावसमर्थत्वात् । पिण्डपि तृयज्ञो हि तयो. प्रकृति । तत्र च त्रयोऽभिधातुमभिमेता" । तस्मादनूह उभयपिण्डानां च सकृदेवानुमन्त्रण कार्यं शक्य त्वान्न पृथक् । असावभ्यङ्क्ष्वासावङ्क्ष्वेत्यत्र च स्त्रीद्वित्वे बहुत्वे चसौशब्दस्योह । अभ्यजाथाम्, अभ्यङ्ध्वम्, अ ञ्जाथाम्, अङ्ध्वमिति च यथार्थम् । स्त्रीणां पृथग्वासो दद्या त् । असंसर्गित्वात् । एतद्व पितर इत्यत्रोहो न कर्तव्य. । असमर्थत्वादेव मन्त्रावृत्तिरस्त्येव । पितृपिण्डान्स्त्रीपिण्डाश्च स कृदेवोपतिष्ठते शक्यत्वान्न पृथक् । अनूहश्च पूर्ववत् । 'मनोन्वा हुवामह' इत्यादेश्चानूह' पूर्ववत् । तस्माच्च नोहेदिति प्रतिषे धाच्च । प्रवाहण चोभयपिण्डाना युगपदेव शक्यत्वात् । अनू हश्च पूर्ववत् । ऋक्त्वाच्च । 'वीर मे दत्त पितर.' इति पितृणा मध्यमपिण्डमादायानेनैव स्त्रीणामपि मध्यममाददीत । अनूह श्च पूर्ववत् । आधत्त पितर इति पिण्डद्वय प्राशयेदनूहश्च पूर्व वत् । ऋक्त्वाच्च । यत्र त्वचि ऊहमिच्छति तत्र विदधाति 'आ त्मनि मन्त्रान्सन्नमयेन्' इति । इति नत्रे' इति च । एव निनयन वर्ज पितृशब्दस्योहो नास्तीत्युक्त तत्र यदुच्यते । पितृशब्दो बहुवचनान्त' पित्रादीस्त्रीनेव वक्ति साहचर्यात् । यथा मित्रा विति वरुणाविति चोक्ते मित्रावरुणौ प्रतीयेते साहचर्यात् । तद्वदत्रापि । मातृस्तु वक्तु न शक्नोति । तत्साहचर्यस्य कचिद प्यप्रतीतत्वात् । तस्मादूह कार्यं इति । तत्र ब्रूम । असमर्थ त्वादूहो नास्तीत्युक्तमेव केवलमभिधान सपादनीयम् । सपि ण्डीकरणेन हि प्रेतत्व निवर्त्य पितृत्व नाम संस्कारविशेष शास्त्रगम्यः प्राप्यते । तच्च मातृष्वप्यविशिष्टमिति मातरपि अभिधत्ते पितृशब्द । एव च कृत्वा एकोद्दिष्टे शास्त्रान्तरदृष्ट पितृशब्दप्रतिषेधोऽप्युपपन्नः । ऊहवादिनोऽतिप्रसङ्गश्चास्ति ।

मात्रादयस्त्रयोऽपि शब्दाः प्रसज्यन्ते। तेनाप्येव नेष्यते । पुनर पि वहुविद्भिर्विचार्य कार्यमित्यलमतिविस्तरेण ॥ ८ ॥

एतेन माघ्या वर्ष प्रोष्ठपद्या अपरपक्षे ॥ ९ ॥

एतेनेति पूर्वेद्यु'प्रभृति कृत्स्नकर्मातिदेश. । एतदुक्तं भव ति । प्रौष्ठपद्या' समीपे योऽपरपक्षस्तत्राष्टम्या माघ्यावर्ष नाम कर्म कर्तव्यम् । तच्चैतेनाष्टकाकर्मणा व्याख्यातमिति । अत्रापि त्रिष्वहःसु कार्यमित्यर्थः ॥ ९ ॥

मासि मासि चैव पितृभ्योऽयुक्षु प्रतिष्ठापयेत् ॥ १० ॥

अपरपक्ष इत्यत्रापि सवध्यते । मध्यगतस्य विशेषाभावा त्प्रयोजनवत्त्वाच्च । तच्च पूर्वपक्षनिवृत्त्यर्थम् । एवमित्यकृत्स्नोप न्नेशार्थम्। तेनान्वष्टक्यमिहातिदिश्यते । अनन्तरत्वात् । पितृभ्य इति मातृनिवृत्त्यर्थम्। प्रतिष्ठापयेत्। कुर्यादित्यर्थ'। एतदुक्त भव ति । प्रतिमासमपरपक्षे अयुग्मासु तिथिषु अन्वष्टक्यवत्पितृभ्य एव श्राद्ध कुर्यादिति । समानकालत्वात्समानकार्यत्वाच्च पार्व णस्यास्य विकल्प । एव वा सूत्रच्छेद. । मासि मासि चैव पितृभ्य. प्रतिमासमपरपक्षेऽन्वष्टक्यवत्पितृभ्य एव कुर्यादित्य र्थ' । अयुक्षु प्रतिष्ठापयेत् । श्राद्धकर्मणि सर्वमयुग्मासु सख्यासु प्रतिष्ठापयेत् । गन्धमाल्यादि सकृद्देय त्रि' पञ्चकृत्वो वेत्या दि ॥ १० ॥

नवावरान् भोजयेत् ॥ ११ ॥

नवप्रसङ्ग' प्रकृत निवर्तयति । तेनान्वष्टक्ये नवावरान्भोज येन्नियमेन ॥ ११ ॥

अयुजो वा ॥ १२ ॥

अशक्तौ प्रागप्ययुजो भोजयेत्सप्त पञ्च त्रीनेक वा । सप्तप

क्षे एकस्यैक इतरयोस्त्रयस्त्रय' । पञ्चपक्षे एकस्य त्रय इतरयोरे कैक । इद चान्वष्टक्य एव ॥ १२ ॥

युग्मान्वृद्धिपूर्तेषु ॥ १३ ॥

'पुसवनसीमन्तोन्नयनचौलकर्मोपनयनविवाहा इति पञ्चा ग्न्याधेयादीनि च श्रौतानि वृद्धिश्राद्धस्य विषयः' इत्येके । 'अन्ये षोडश सस्कारा॰ श्रवणाकर्मादयश्च श्रौतानि च' इत्या हु'। 'अनिष्ट्वा तु पितॄञ्श्राद्धे वैदिक कर्म नारभेत्' इति स्मृ ते । वापीकूपतडागारामाद्युद्यापनादिपूर्तश्राद्धस्य विषय॰ । उभयत्र युग्मान्भोजयेत् ॥ १३ ॥

अयुग्मानितरेषु ॥ १४ ॥

पूर्वेद्युरष्टम्या काम्य एकोद्दिष्ट इति चतुर्व्वेय विधिः । मासि मासि चेत्यत्रान्वष्टक्यवत् । पार्वणे तु वक्ष्यति । एवम ष्टविधेष्वपि श्राद्धेषु ब्राह्मणपरिमाणमुक्तम् ॥ १४ ॥

प्रदक्षिणमुपचारो यवैस्तिलार्थ' ॥ १५ ॥ ॥५॥

वृद्धिपूर्तेष्विति शेषः । अत्र प्रदक्षिणमिति वचनादितरश्रा द्धेषु प्रसव्यमुपचार इति गम्यते । तिलकार्ये यवान्कुर्यात् । य ज्ञोपवीतयुग्मकर्मादीनामुपलक्षणमिदम् ॥ १५ ॥ इति द्वितीये पञ्चमी कण्डिका ॥ ५ ॥

रथमारोक्ष्यन्नाना पाणिभ्यां चक्रे अभिमृशे-त् । अहते पूर्व पादावालभेद्बृहद्रथन्तरे ते चक्रे ॥१॥

इतिकारोऽध्याहार्य । त्रयाणा वर्णानामिद समान भव ति । रथो नाम बहुयुगो मण्डलाकृति । यदा रथमारोहति गमनार्थ ततः पूर्वपक्षे चक्रे पाणिभ्यां नाना अभिमृशेन्मन्त्रेण । नानाग्रहणं युगपदेव दक्षिणेन दक्षिण सव्येन सव्यमभिमृशेन्न

पर्यायेणेत्येवमर्थम् । दूरदेशगमने त्वाद्य एवारोहणेऽयं विधि नैत्वर्थमात्रेष्वारोहणेषु ॥ १ ॥

वामदेव्यमक्ष इत्यक्षाविष्ठाने ॥ २ ॥

अभिमृशेदिति वर्तते । पाणिभ्यां युगपच्चक्रनाभी अभिमृशेन्मन्त्रेण ॥ २ ॥

दक्षिणपूर्वाभ्यामारोहेत् । वायोष्ट्वा वीर्येणारोहामीन्द्रस्यौजसाधिपत्येनेति ॥ ३ ॥

दक्षिणापादः पूर्वो ययोस्तौ तथोक्तौ । एवभूताभ्यामारोहेन्मन्त्रेण ॥ ३ ॥

रश्मीन्सम्मृशेदरश्मिकान्वा दण्डेन । ब्रह्मणो वस्तेजसा सगृह्णामि सत्येन वस्तेजसा सगृह्णामीति ॥ ४ ॥

रश्मय प्रग्रहास्तान्स्पृशेत् । अथ यद्यश्वा अरश्मिका· स्युस्तानेव दण्डेन स्पृशेत् । मन्त्रस्तूभयत्र । बहुवचनाद्बहुयुगो रथोऽत्राभिमेत इति गम्यते ॥ ४ ॥

अभिप्रवर्तमानेषु जपेत् । सहस्रसनि वाजमभिवर्तस्व रथ देव प्रवह वनस्पते वीड्वङ्गो हि भूया इति ॥ ५ ॥

चशब्दोऽध्याहार्य· । सारथिना नोदिता अश्वा यदा इष्टा दिशमभिगच्छन्ति तदा सहस्रसनि वनस्पत इत्यृच जपेत् । एतावद्रथारोहणम् ॥ ५ ॥

एतयाऽन्यान्यपि वानस्पत्यानि ॥ ६ ॥

अभिमृशेदिति शेष· । अन्यान्यपि शकटप्रभृतीनि वानस्पत्यान्यारोक्ष्यन्नेतया तान्यभिमृशेत् । एतयेत्यस्मिन्नसति अ-

न्यान्यपीत्यादुत्तरसूत्रस्यैव शेष स्यात् । तस्माद्योगविभागा र्थमेतयेति वचनम् ॥ ६ ॥

स्थिरौ गावौ भवता वीळु रक्ष इति रथाङ्गमभिमृशेत् ॥ ७ ॥

यद्यदङ्गमस्यामृचि दृष्ट तत्तदभिमृशेत् । गावौ । अक्ष ईषा युग चेत्यर्थ । इद चाभिमर्शन शकटादिषु न रथे । गावाविति लिङ्गात् । न हि रथस्य गोयुक्तत्व द्विगोयुक्तत्व च सभवति । बहुयुगत्वादश्वयुक्तत्वाच्च ॥ ७ ॥

सुत्रामाण पृथिवी द्यामनेहसमिति नाव ॥८॥

आरोहेदिति शेष. । आरुहेमेति मन्त्रलिङ्गात् । यदा यदा च नावमारोहत्युदकतरणार्थ तदा तदा एतयारोहेत् ॥ ८ ॥

नवरथेन यशस्विन वृक्ष ह्रद वा विदासिन प्रदक्षिण कृत्वा फलवती शाखा आहरेत् ॥ ९ ॥

नवरथेन यदा गच्छति तदाय विशेषः । वानस्पत्यजपान्त कृत्वा इदमपि कुर्यात् । नवोऽनुपभुक्त' । यशस्वी यशसा युक्त' । अविदासी अशोष्यः । आम्रजम्ब्वादिशाखा आहरेत्॥९॥

अन्यद्वा कौटुम्ब ॥ १० ॥

अन्यद्वा कुटुम्बोपयोगि द्रव्यमाहरेत् । आहृत्य ततः ॥१०॥

ससदमुपयायात् ॥ ११ ॥

गृहसमीपमागच्छेदित्यर्थः ॥ ११ ॥

अस्माकमुत्तम कृधीत्यादित्यमीक्षमाणो जपित्वावरोहेत् ॥ १२ ॥

जपित्वा नवरथादवरोहेत ॥ १२ ॥

**ऋषभ मा समानानामित्यभिक्रामन् ॥ १३ ॥**

एतत्सूक्तं गृह मतिपद्यमानो जपेत् ॥ १३ ॥

**वयमद्येन्द्रस्य प्रेष्ठादत्यस्त यात्यादित्ये ॥ १४ ॥**

जपेदिति शेष. । तस्मिन्नेवाहनि ॥ १४ ॥

**तद्वो दिवो दुहितरो विभातीरिति व्युष्टा-यां ॥ १५ ॥  ॥ ६ ॥**

जपेत् । त्रीण्येतानि प्रतीकानि मन्त्रसञ्ज्ञकानि । तस्मादुपांशु स्यु' । एतावानवरथे विशेष ॥ १५ ॥ इति द्वितीये षष्ठी कण्डिका ॥ ६ ॥

**अथातो वास्तुपरीक्षा ॥ १ ॥**

उच्यत इति शेषः । उक्तोऽर्थ । अत शब्दो हेत्वर्थः । यस्माद्गृहनिमित्ते समृद्धिव्यृद्धी भवतस्तस्माद्वास्तुपरीक्षोच्यत इति । यद्येव काम्यकर्माण्यनर्थकानि नैतदेव न्यायविदः परि हरन्ति 'तच्चैव हि कारण शब्दश्चेति' ॥ १ ॥

एवलक्षणयुक्ते देशे वास्तु कार्यमित्याह—

**अनूषरमविवदिष्णु भूम ॥ २ ॥**

भूमशब्दो भूमिवाचक । यथा यव न वृष्टिर्व्युनक्ति भूमे ति । यत्र विवादो नास्ति तदविवदिष्णु ॥ २ ॥

**ओषधिवनस्पतिवत् ॥ ३ ॥**

मतुपो वकारश्छान्दस. । एवविध यद्भूम तत्र वास्तु कार्यम् ॥ ३ ॥

**यस्मिन्कुशवीरिणप्रभूत ॥ ४ ॥**

तत्र कार्यम् ॥ ४ ॥

**कण्टकिक्षीरिणस्तु समूलान्परिखायोद्वासयेद-**

पामार्गं शाकस्तिरवक· परिव्याधइति चैतानि ५

समूलान्परिखायोद्वासयेदिति वर्तते । अपामार्गादीनां पु ल्लिङ्गत्वादेतानिति वक्तव्ये एतानीति नपुंसकवचनमन्यान्य प्येवमकाराणि वास्तुविद्यायां निषिद्धान्युद्वास्यानीत्येवमर्थ म् ॥ ५ ॥

यत्र सर्वत आपो मध्य समेत्य प्रदक्षिण शय-नीय परीत्य प्राच्य स्यन्देरन्नप्रवदत्यस्तत्सर्व समृद्ध ॥ ६ ॥

यस्मिन्देशे आप सर्वाभ्यो दिग्भ्य आगत्य मध्य प्राप्य तत प्रदक्षिण शयनीय परीत्य प्राङ्मुख्यो गच्छेयुः । अप्रव दत्यः। न लोप छान्दस'। अशब्दवत्य इत्यर्थः। एतल्लक्षणयुक्त वास्तु विद्याद्वत्तधनधान्यादिभि सर्वे समृद्ध भवति। एव ब्रुवता एतत्प्रदर्शित भवति । सर्वत उच्छ्रिता मध्यतो निम्ना मीपच्च प्राक्प्रवणां भूमि कृत्वा गृह कुर्यात् । तत्र प्राच्यां दि शि गृहिण· शयनीय गृह कुर्यात् । शयनीयगृहस्योत्तरतो ऽपां शनैः प्रदक्षिण निर्गमनार्थ स्पन्दनिकां कुर्यादिति ॥ ६ ॥

समवस्रवे भक्तशरण कारयेत् ॥ ७ ॥

येन पथा आपो निर्गच्छन्ति स देश समवस्रव· ।प्राच्यां दिशीत्यर्थ' । तत्र महानस कारयेत् शयनीयस्योत्तरतः । ननु शाखान्तरे प्राग्दक्षिणस्या दिशि भक्तशरण दृष्टमत कथ प्रा च्यां दिशीत्याशक्य प्रकृतस्य स्तुतिमाह ॥ ७ ॥

बह्वन्न भवति ॥ ८ ॥

ऋद्धिमद्भवतीत्यर्थ' । तस्मादत्रैव कार्यम् ॥ ८ ॥

दक्षिणाप्रवणे सभां मापयेत्साऽद्यूता ह भवति ॥९॥

यत्र गृही स्वैरमास्ते स्वजनैरागन्तुभिश्च सह सा सभा तां दक्षिणाप्रवणे कुर्यादुदीच्या दिशीत्यर्थ । तत्र कृताऽद्यूता द्यूतवर्जिता भवति । दोषा न सन्तीत्याह ॥ ९ ॥

युवानस्तस्यां कितवाः कलहिन प्रमायुक्ता भवन्ति ॥ १० ॥

अत्र कृता चेद्युवान एव सन्त' प्रमायुक्ता भवन्ति । अल्पायुषो म्रियन्त इत्यर्थ । कलहप्रियाश्च कितवाश्च भवन्ति । ननु द्यूतवर्जितत्वात्कथ कितवा इति । उच्यते । कितवा इति दम्भिन इत्यर्थ । तस्मात्तत्र न कार्या । शास्त्रान्तरेऽविहितत्वा दनूद्य प्रतिषिद्धवान् ॥ १० ॥

क तर्हि कार्येत्याह—

यत्र सर्वत आप प्रस्यन्देरन्सा स्वस्त्ययन्यद्यूता च ॥ ११ ॥ ॥ ७ ॥

यस्मिन्देशे सर्वाभ्यो दिग्भ्यो आप आगच्छन्ति तत्र कार्या सभा । गृहमध्य इत्यर्थः । सा शुभकर्यद्यूता च भवति ॥ ११ ॥

इति द्वितीये सप्तमी कण्डिका ॥ ७ ॥

अथैतैर्वास्तु परीक्षेत ॥ १ ॥

पूर्वलक्षणासभवे कथमुत्तरेषा बलीयस्त्व स्यादित्येवमर्थो ऽथशब्द. । अथ विशिष्टान्येतानीति । वास्तुग्रहण सभाधिकारनिवृत्त्यर्थम् ॥ १ ॥

जानुमात्र गर्त खात्वा तैरेव पांसुभि प्रतिपूरयेत् ॥ २ ॥

गर्तो नामावट. । तैरेव तत उद्धृतैरेव ॥ २ ॥

अधिके प्रशस्त समे वार्त न्यूने गर्हितं ॥ ३ ॥

पूरिते गर्तादधिके पांसुराशौ प्रशस्त वास्तु भवति । तेन समे वृत्तिमद्भवति । तस्मान्न्यूने गर्हित कुत्सित भवति । तस्मा त्तत्र न कार्यम् ॥ ३ ॥

अस्तमिते पांसुपूर्णं परिवासयेत् ॥ ४ ॥

अस्तमिते तमेव गर्तमद्भि पूरयित्वा तां रात्रिं परिवासये त् । ततो व्युष्टायां निरीक्षेत ॥ ४ ॥

सोदके प्रशस्तमार्द्रे वार्तं शुष्के गर्हित श्वेत मधुरास्वाद ॥ ५ ॥

पूर्वेण तुल्यम् ॥ ५ ॥

सिकतोत्तर ब्राह्मणस्य ॥ ६ ॥

सिकतोत्तर सिकताबहुलमित्यर्थः ॥ ६ ॥

लोहित क्षत्रियस्य ॥ ७ ॥

मधुरास्वाद सिकतोत्तरमिति वर्तते ॥ ७ ॥

पीत वैश्यस्य ॥ ८ ॥

अत्रापि द्वय वर्तते । श्वेत लोहित पीतमिति त्रयो वर्णाः त्रयाणां वर्णानां विशेषाः । अन्यत्सर्वं समानम् ॥ ८ ॥

तत्सहस्रसीतं कृत्वा यथादिक्समचतुरस्र मापयेत् ॥ ९ ॥

एव परीक्षित वास्तु बहुसीत कुर्यात् । बहुश॰ सीतया क र्षेदित्यर्थ॰ । ततः सर्वासु दिक्षु समचतुरस्र स्थण्डिल कुर्यात् । चतुरस्रं चतुःकोण मापयेत्कुर्यात् । सहस्रशब्दोऽत्र बहुवाची॥९॥

आयत चतुरस्र वा ॥ १० ॥

प्रागायत चतुरस्र वा कुर्यात् । आयतं दीर्घम् । तत्रैव क्रमः । परिव्याध इति चैतानीत्यन्तां बाह्यवास्तुपरीक्षां कु

त्वा तत आन्तरी परीक्षामयैतैर्वास्तु परीक्षेतेत्यादि आयत चतुरस्र वेत्यन्ता कृत्वा यत्र सर्वत्र आपो म य समेत्येत्यादि विज्ञेयम् । ततो वक्ष्यमाण प्रोक्षण कुर्यात् ॥ १० ॥

तच्छमीशाखयोदुम्बरशाखया वा शन्तातीयेन त्रि परिव्रजन्प्रोक्षति ॥ ११ ॥

'शन्न इन्द्राग्नी' इति सूक्त शन्तातीयमिति प्रसिद्धम् । तेन सूक्तेन त्रि परिव्रजन्प्रोक्षति । सर्वत्र मन्त्रान्ते कर्मारम्भ' । सिद्ध हि करण भवति नासिद्धम् । परशुना छिनत्तीति पर शुवत् । मन्त्रावृत्तिरुक्ता । 'मन्त्रान्ते व्रजनारम्भ प्राचीमारभ्य पर्येति' इति ॥ ११ ॥

अविच्छिन्नया चोदकधारया । आपो हि ष्ठा मयोभुव इति तृचेन ॥ १२ ॥

त्रि' प्रदक्षिण परिव्रजति । अत्रापि गारावृत्तिस्तृचावृत्ति श्च व्रजनगुणत्वात् ॥ १२ ॥

वशान्तरेषु शरणानि कारयेत् ॥ १३ ॥

यावन्तस्तत्र वशा सभवन्ति तत्र द्वयोर्द्वयोर्वशयोरन्तरेषु कुड्यादिभि पृथक्कृतापवरकादिशरणानि कारयेत् । शर णान्यवान्तरगृहाणि ॥ १३ ॥

गर्तेष्ववकां शीपालमित्यववापयेत् नास्याग्निर्दाहुको भवतीति विज्ञायते ॥ १४ ॥

सर्वासां स्थूणानां गर्तेषु अवकां शीपाल च अवदघ्यात् । एव कृते नास्याग्निर्दाहुको भवति इति श्रूयते ॥ १४ ॥

मध्यमस्थूणाया गर्तेऽवधाय प्रागग्रोदगग्रान्कु-

मदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति आप्यायस्व समेतु त इति स्थालीपाकमष्टशत हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति सोमाय स्वाहा नक्षत्राधिपतये स्वाहा शीतपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातोपशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीय जपेत् ॥ १९ ॥

२० परमन्वावर्तते।

स परमन्वावर्ततेऽथ यदास्य महिष्याजाविकमानुपाश्वोष्ट्र विभुरादि च प्रसूयन्ते हीनाङ्गान्यधिकाङ्गानि विकृतानि रूपाणि जायन्त इत्येवमादीनि तान्येतानि सर्वाणि रुद्रदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति इमा रुद्राय स्थिरधन्वने गिर इति स्थालीपाकमष्टशत हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति रुद्राय स्वाहा उमापतये स्वाहा त्रिशूलपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीय जपेत् ॥ २० ॥

२१ सर्वा दिशोऽन्वावर्तते।

स सर्वा दिशोऽन्वावर्ततेऽथ यदास्यायुक्तानि यानानि प्रवर्तन्ते देवतायतनानि कम्पन्ति देवता प्रतिमा हसन्ति गायन्ति नृत्यन्ति खिद्यन्ति भिद्यन्ति रुन्त्युन्मीलयन्ति निमीलयन्ति प्रतियान्ति नद्यस्कन्धमादित्यो दृश्यते विदले च परिवेषो दृश्यते केतुकुन्तमुपानच्छत्र वज्रदन्तमुसलानि प्रज्वलन्तीत्यश्वानां वारिभिरवरङ्गा, क्षरन्ति हतानि कर्माणि करिकन्त इत्येवमादीनि तान्येतानि सर्वाणि विष्णुदैवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति इद विष्णुर्विचक्रम इति स्थालीपाकमष्टशतं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति विष्णवे स्वाहा महाद्भुताधिपतये स्वाहा चक्रपाणये स्वाहा ईश्वराय स्वाहा सर्वोत्पातोपशमनाय स्वाहेति महाव्याहृतिभिश्च हुत्वा शन्तातीयं जपेत् ॥ २१ ॥

२२ अग्निकार्यफलम् ।

अग्निकार्यमासप्तरात्र कुर्युर्यदैतन्न क्रियते पुत्रो म्रियते पौत्रो म्रियते यनमात्मान च निवेश्यति सुवर्णगौर्वासो हिरण्य दक्षिणां दत्वा ब्राह्मणान्भोजयित्वा स्वस्त्ययन वाचयीत नम आचार्येभ्यो नम आचार्येभ्यो नम शौनकाय नम शौनकाय ॥ २२ ॥

इत्याश्वलायनगृह्यपरिशिष्टे चतुर्थोऽध्याय ॥ ४ ॥

समाप्तमिदमाश्वलायनगृह्यपरिशिष्टम् ॥



॥ श्री ॥

# आश्वलायनगृह्यकारिका ।

## प्रथमोऽध्यायः १ ।

१ परिभाषा ।

ॐ आश्वलायनमाचार्य नत्वा तद्गृह्यकर्मणाम् । प्रयोगं वच्मि संक्षेपाद्वृत्तिकारादिशंसितम् ॥ १ ॥ प्राणानायम्य संकल्प्य परितः स्थण्डिलं शुचि । अधिकं वेषुमात्रं वा गोमयेनोपलिप्य च ॥ २ ॥ यज्ञियं शकलं किंचिदादीत ततः परम् । तेनान्तः शकलेनैव षड्रेखा उल्लिखेत्ततः ॥ ३ ॥ अग्निस्थापनदेशस्य पश्चात्प्रादेशसमिताम् । उल्लिखेदुदगायामां तस्या उभयतोऽपरे ॥ ४ ॥ पूर्वायते उदक्संस्थे असंसृष्टे च पूर्वया । मध्ये तिस्र उदक्संस्थाः पूर्वायामा असंहताः ॥ ५ ॥ लिखिता येन शकलं यज्ञियं तं निधाय च । अद्भिरभ्युक्ष्य शकलं निरस्याप उपस्पृशेत् ॥ ६ ॥ प्रतिष्ठाप्याग्निलेखासु होमायालं हविर्भुजम् । एतत्तत्र प्रकुर्वीत होष्यन्संस्थापितेऽनले ॥ ७ ॥ आज्यैकद्रव्यके होमे स्याच्चेदाज्यपरिग्रहः । स्यात्परिस्तरणं तत्र कृताकृतमिति स्थितिः ॥ ८ ॥ नोच्चारयति यत्राज्यपदं कर्मसु सूत्रकृत् । अनादिष्टाज्यहोमेषु तत्र नित्याः परिस्तृतिः ॥ ९ ॥ सर्वस्मिन्पाकयज्ञे स्त आज्यभागौ कृताकृतौ । सर्वेषु पाकयज्ञेषु भवेद्ब्रह्मा कृताकृतः ॥ १० ॥ धन्वन्तरिमखे ब्रह्मा नित्यः शूलगवे तथा । ऊचे होमं क्वचिन्नाम्ना क्वचिन्मन्त्रेण सूत्रकृत् ॥ ११ ॥ नोभयं यत्र तत्रेष्टं हवनं नामधेयतः । मन्त्रेण होमो निर्वापस्तूष्णीं नाम्ना समन्त्रकम् ॥ १२ ॥ नैके काचन पक्षो-

ड्य चौलादावाश्रितो यदा । तदाग्निरिन्द्र इत्याद्या होतव्या इति वृत्तिकृत् ॥ १३ ॥ अनेके पाकयज्ञाः स्युरेकस्मिन्काल एव चेत् । समानतन्त्रकाः कार्या न तत्राद्वृत्तिरिष्यते ॥ १४ ॥ पात्रासादनमिच्छात आज्याधिश्रपणादि च । स्रुवादिमार्जनं चैमरज्जुमहरण तथा ॥ १५ ॥ पूर्णपात्र भवेन्नित्यमाज्यस्योत्पवन तथा । द्रव्यानादेशे आज्य स्यादनुक्ते साधने स्रुवः ॥ १६ ॥ जपानुमन्त्रणे मन्त्र उपस्थानाभिमन्त्रणे । मन्त्रो य. कर्मकरणे गृह्यकर्मण्युपांशु षट् ॥ १७ ॥ इद कार्यमनेनेति न कचिद्दृश्यते विधिः । लिङ्गादेवेदमर्थत्व येषां ते मन्त्रसञ्ज्ञकाः ॥ १८ ॥ मन्त्रान्ते कर्म कर्तव्य मंत्रस्य करणे त्वतः । कर्माद्वृत्तौ तु मन्त्रस्याप्यावृत्तिर्गृह्यकर्मणि ॥ १९ ॥ आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः । तदासीनेन कर्तव्य न प्रह्वेण न तिष्ठता ॥ २० ॥ इति परिभाषा ॥

२ स्थालीपाक ।

अङ्गसङ्गस्य तत्रोक्ते[१] स्थालीपाकः पुरोच्यते । गृहवेशीय होमाद्या पौर्णमास्यागमिष्यति ॥ १ ॥ तस्या त प्रारभेतेति वृत्तिकारेण भाषितम् । प्रातरौपासन हुत्वा समिधौ द्वे निधाय च ॥ २ ॥ अथवा तिस्र आदध्यात्क्रतुसकल्पपूर्वकम् । सद्यस्कालो भवेद्वा पौर्णमासस्तु पार्वण[२] ॥ ३ ॥ अथ रज्जु प्रकुर्वीत त्रिसधि त्रिवृतां कुशैः । स्याद्रज्जुकरणे पूर्व सव्यः पाणिरिहोत्तर. ॥ ४ ॥ पश्चाद्दक्षिण इत्याह जयन्त[३] स्वनिबन्धने । निद याद्रुदगग्रां तां रज्जुमग्रत आत्मनः ॥ ५ ॥ कुशमुष्टि छिनत्त्यस्यां प्रागग्र त निधाय च । तया बर्हिर्द्विरावेष्ट्य रज्जुमूल तु वेष्टयेत् ॥ ६ ॥ पूर्व या वेष्टिता तस्या अधस्तात्ता नयेदथ । निधायोपरि चान्यांश्च परिस्तृत्यादिसिद्धये ॥ ७ ॥ कृत्वा-

१ सर्वत्र २ साधितम् ३ यस्यात

न्या पूर्ववद्रज्जु निदध्यात्ता च पूर्ववत्। द्वि¹प्रादेशो भवेदिध्म एकविंशतिदारुक ॥ ८ ॥ पालाश खादिरो वा स्यात्प्रागग्रं तं निधाय च। शमीवटादिक ग्राह्यमनयोर्यत्रसंभव' ॥ ९ ॥ वेष्टयेत्सकृदेवेध्मं वद्धोपरि निधाय च। जयन्तमतमत्रोक्त व क्ष्ये वृत्तिकृतो मतम् ॥ १० ॥ इष्टिवद्धन्धन कार्यं मन्त्रस्यात्रोह इष्यते। अरत्न्यायाम इध्म स्यात्स पञ्चदशदारुक' ॥ ११ ॥ एतच्च वृत्तिकारेण शान्तिकर्मणि साधितम्। विष्ण्वादयस्तु नेच्छन्ति मन्त्रसनहने तयो ॥ १२ ॥ इच्छत्येव जयन्तस्तु म न्त्रमूह तु नेच्छति। भुञ्जीयातामहन्येव मासमापादि वर्जयेत् ॥ १३ ॥ निश्यधश्च शयीयाता दपती मैथुन नच। अपरेद्युर्हुते प्रात परितस्त्रि· समूहनम् ॥ १४ ॥ पाणिना सोदकेनाग्ने· स-मन्तात्परिमार्जनम्। तत्समूहनमन्त्रेष्टं जयन्तवचनं यथा ॥ १५ ॥ पर्यूहपरिषेकौ स्त सर्वत्र त्रिस्त्रिरम्भसा। सर्वासु दिक्षदक्स स्था प्राच्यादिषु परिस्तृति ॥ १६ ॥ अग्ने पोडशभिर्दर्भै· पूर्वादिषु परिस्तृति । स्तृणेद्दक्षिणत काश्चिद्ब्रह्मावस्थायिक मेष्ठु ॥ १७ ॥ दर्भेषूत्तरतो द्वन्द्वे पात्राणि न्यञ्चि सादयेत्। काश्चिदुत्तरतो दर्भानास्तीर्य परिषिञ्चति ॥ १८ ॥ युग्मान्प्रा देशमात्रांश्च पूर्वाग्रान्सर्वदिक्ष्वपि। तत्क्रम भगवानाह श्लोक नैकेन वृत्तिकृत् ॥ १९ ॥ स्थालीं चरो· प्रोक्षणभाजन च द र्वीस्रुवौ सादय दर्विहोमे। पात्र प्रणीतार्थमथाज्यपात्रमिध्म क्रमेण क्रमवित्कुशांश्च ॥ २० ॥ शूर्पकृष्णाजिनाद्यन्यदर्थप्राप्त च सादयेत्। अनन्तस्तरणौ यौ तु कुशौ प्रादेशसमितौ ॥ २१ ॥ अनखच्छेदितौ साग्रौ तौ पवित्राभिधायकौ। अप्रच्छिन्नाग्रयो नैव त्याग· सूत्रे प्रशब्दतः ॥ २२ ॥ सिञ्चेद्युञ्जानि पात्राणि सपवित्रेण वारिणा। उत्ताने प्रोक्षणार्थेऽपो निनयेत्सपवित्र

---

१ स्याप्यूह २ वर्जितम् ३ समूह्य च

के ॥ २३ ॥ पवित्राभ्यां त्रिरुत्पूतैस्त्रिः प्रोक्ष्योर्ध्वबिलानि तु । विस्रस्येध्मं च चमसं सपवित्रमथाग्रत' ॥ २४ ॥ पूरयित्वा जलैस्तत्र गन्धपुष्पाणि चावपेत् । ब्रह्मन्नपः प्रणेष्यामीत्याह ब्रह्मा यदा भवेत् ॥ २५ ॥ नीत्वा त नासिकादघ्नमुदगग्नेर्निधाय च । दर्भैः प्रच्छादयेत्पात्रं पूर्णपात्रं तदुच्यते ॥ २६ ॥ पवित्रान्तर्हिते शूर्पे व्रीहिमुष्टिचतुष्टयम् । निर्वपेदग्नये त्वादिमन्त्रेणावर्तते च सः ॥ २७ ॥ निर्वपेदपरं त्वग्नीषोमाभ्यां त्वेति मन्त्रतः । पवित्रान्तर्हितान्व्रीहीन्प्रोक्षेन्निर्वापसंख्यया ॥ २८ ॥ पूर्वमन्त्रद्वयेनैव प्रोक्षामीति विशेषणम् । प्रत्यग्ग्रीवं स्तृणात्यूर्ध्वलोम कृष्णाजिनं ततः ॥ २९ ॥ तस्मिन्नुलूखलं कृत्वा तत्र व्रीहीस्तथावपेत् । व्रीहीनवहन्याच्चांस्त्रिः शुक्लीकृततण्डुलान् ॥ ३० ॥ त्रिः प्रक्षाल्य पचेदाज्यमासिच्य सपवित्रके । अपोह्योत्तरतोऽङ्गारांस्तेष्वधिश्रित्य तद्धृतम् ॥ ३१ ॥ अधिश्रितमवज्वलय दर्भाग्रद्वयमस्यति । तेनैव ज्वलताज्यं च त्रिः पर्यग्नि करोत्यथ ॥ ३२ ॥ कर्षन्निवोदगुद्वास्य चाङ्गारानतिसृज्य च । अङ्गुष्ठोपकनिष्ठाभ्यां सपवित्रे असंहते ॥ ३३ ॥ गृहीत्वोत्तानपाणिभ्यां त्रिः प्रागुत्पूय तद्धृतम् । सवितुष्ट्वेति मन्त्रेण सकृत्तूष्णीं द्विरिष्यते ॥ ३४ ॥ कृताज्योत्पवने प्रोक्ष्य पवित्रे प्रास्य चानले। अनलात्प्रत्यगास्तीर्णे बर्हिष्याज्यं निधाय च ॥३५॥ अथादाय स्रुवं दर्वीं (?) दक्षिणेन करेण तु । सव्येन दर्भानादाय संयोज्याग्नौ प्रतापयेत् ॥ ३६ ॥ प्रताप्य सकुशौ दर्वीस्रुवौ दर्वीं निधाय च । स्रुवस्य बिलमग्रैस्तु पृष्ठमभ्यात्ममग्रतः ॥ ३७ ॥ आरभ्य पृष्ठतो यावदुपरिष्टाद्बिलं भवेत् । कुशानां मूलतो दण्डमेकैकं त्रिर्मृजीत वै ॥ ३८ ॥ प्रोक्ष्य प्रताप्य चासाद्य बर्हिष्युत्तरतो घृतात् । समृज्य तैः कुशैर्दर्वीमासाद्योत्तरतः

१ 'दर्वीस्रुवावथादाय' इति स्यात्

स्रुवात् ॥ ३९ ॥ तान्कुशान्कृतसमार्गान्प्रोक्ष्याग्नौ प्रहरेदथ । अभिघार्य चरु चोदग्द्वास्य च तत परम् ॥ ४० ॥ अन्तरेणाग्निमाज्य च नीत्वाप्यासाद्य बर्हिषि । आज्याद्दक्षिणतोदेशे जयन्तवचन यथा ॥ ४१ ॥ केचित्प्रत्यभिघार्येति सूत्रमन्यद्धीयते । सहश्रपणपक्षे तु पृथगुद्धरणाय तै ॥ ४२ ॥ निम्न्यात्पात्रमितरन्मध्ये चर्वाज्ययोस्तत । अलकृत्याभिघार्येमम धायायन्त इत्यथ ॥ ४३ ॥ स्रुवेणाज्य गृहीत्वाग्नेः प्रत्युगुत्तरदेशत । आरभ्य दिशमाग्नेयीमाज्यधारामृजु हरेत् ॥ ४४ ॥ नैर्ऋती दिशमारभ्य त्वीशानीं पूर्ववद्धरेत् । उभयत्र चतुर्थ्यन्त प्रजापतिपद स्मरेत् ॥ ४५ ॥ स्वाहेत्याघारयेदेतावाघाराविति भाषितौ । जुहुयादग्नये स्वाहेत्युदगाज्य स्रुवेण तु ॥ ४६ ॥ तेनैव जुहुयादाज्य सोमायेति तु दक्षिणे । उद्धृत्य च चरोर्धेममभिमृश्येदमग्नये ॥ ४७ ॥ इतीदमग्नीषोमाभ्यामिति त्वभिमृशेत्परम् । दर्व्याम्रुपस्तृणात्याज्यमाग्नेयचरुमध्यत. ॥ ४८ ॥ अवद्य हविरङ्गुष्ठपर्वमात्र तदोप्य च । अस्यैव पूर्वतस्तद्वदवद्यास्यां तदावपेत् ॥ ४९ ॥ पात्रस्थमभिघार्यास्यां स्थितमप्यभिघारयेत् । जुहुयादग्नये स्वाहा दर्व्या म ये हविर्बुज. ॥ ५० ॥ प्रत्यक्तरे वा देशे तदाज्यभागावपेक्ष्य च । जुहुत्यभिदधदिव दर्व्या मध्येन याज्ञिका ॥ ५१ ॥ उपस्तीर्य द्वितीयस्याप्यवदानादि पूर्ववत् । प्राग्वोदग्वाग्नीषोमाभ्या स्वाहेति जुहुयादथ ॥ ५२ ॥ पश्चावत्ती तु पश्चार्धादप्यवद्यति वै तत । स्विष्टकृत्युत्तरार्धस्य पुरस्तादप्यवद्यति ॥ ५३ ॥ उपस्तीर्याथ हविषोर्द्वयोरप्युत्तरार्धत । पूर्वावदानतो भूय सकृत्सकृदवद्यति ॥ ५४ ॥ ओप्य द्विरभिघार्य तत्पात्रस्थ नाभिघारयेत् । यदस्येत्यादिना हुत्वा प्रागुदक हविर्भुज ॥ ५५ ॥ तामिध्मबन्धनीं रज्जु विसस्य प्रास्य चानले । अयाश्चेत्यादिभिर्मन्त्रैर्हु-

त्वाज्याहुतिसप्तकम् ॥ ५६ ॥ निनयेत्पूर्णपात्रं तन्निहितं त्वथ बर्हिषि। वामभागे तथासीना पत्नी प्रत्यग्घविर्भुजः ॥ ५७ ॥ आसिच्य पाणौ तत्तोयं माह प्रजा परासिचम्। आपो ऽस्मानय मन्त्र इदमाप इतीरितः ॥ ५८ ॥ सुमित्र्या न इति त्वन्य एभिर्मार्जनमाचरेत्। कार्यं पुंसवनादौ तु पत्न्या अपि तु मार्जनम् ॥ ५९ ॥ केचिन्निनीतिमेवाहुरुपस्थायो च मे स्वर। पर्युक्ष्य परिषिच्यान्नं हुतशिष्टं घृतं च यत् ॥ ६० ॥ ब्रह्मणे तदभावे तु ब्राह्मणाय प्रदीयते। अग्नीषोमपदस्थाने इन्द्राग्नीपदमावपेत् ॥ ६१ ॥ अयमेव विशेषः स्याद्दर्शे त्वन्यत्समं भवेत्। एतत्तन्त्रं हुताना स्यान्नोपवासादिरिष्यते ॥ ६२ ॥ प्रधानदेवतान्यत्वं सद्यस्कालस्तथेष्यते ॥ ६३ ॥ (८३) इति स्थालीपाकप्रयोगः ॥

३ स्वस्तिवाचनम्।

स्वस्तिवाचनमत्रेष्टं गृह्यकर्मसु केषुचित्। आचार्येणापि शास्त्रेऽस्मिन्मङ्गलार्थमुदीरितम् ॥ १ ॥ अर्चिता ब्राह्मणाः सम्यग्गन्धमाल्यैः सदक्षिणैः। तिष्ठेयुः प्राङ्मुखा युग्मा वक्तारो दर्भपाणयः ॥ २ ॥ अथ वाचयिता तेषां दक्षिणस्यामुदङ्मुखः। बिभ्रत्कुम्भमपां पूर्णं पिहिताननमर्चितम् ॥ ३ ॥ अथ वाचयितुर्बाहुं दक्षिणं समुपाश्रिताः। तिष्ठन्त्युदङ्मुखाः सर्वे सस्कार्यस्तत्रतत्र तु ॥ ४ ॥ मन इत्यादिकं मन्त्रमेकाग्रमतिरादिशेत्। मनसः स्व इति ब्रूयुस्ते समाहितपूर्वकम् ॥ ५ ॥ प्रसीदन्तु भवन्त इत्यथ वाचयिता वदेत्। प्रसन्नाः स्म इति स्पष्टमाचक्षीरंस्तथान्विताः ॥ ६ ॥ शान्तिपुष्टयृद्ध्यविघ्नानि शिवं कर्म तथैव च। अस्तुशब्दान्तमुच्येरन्वाचयित्वा तथा परैः ॥ ७ ॥ प्रस्तुत्य देवतायां तु होमं कुर्याद्विचक्षणः। तस्य नाम गृहीत्वा-

१ तिष्ठेद्वाचयिता

थ प्रीयतामिति भाषते ॥ ८ ॥ पुण्याहं स्वस्ति ऋद्धिं च भवन्त्पूर्व ब्रुवन्त्विति । प्रणवार्थं त्रिराचष्टे भवदादी विना परे ॥ ९ ॥ पुण्याहादेस्त्रिरभ्यासैर्मन्द्रमध्योच्चनिःस्वनैः । आचक्षीरन्निमे सर्वे यथागमपरम्परा ॥ १० ॥ अत्युक्तिविषये भेदस्तृतीयस्त्वृद्ध्यतामिति । तुर्य श्रीरस्त्विति ब्रूयादस्तु श्रीरिति च द्विजाः ॥ ११ ॥ आप इत्यादिभिः शान्तिं ततः कुर्यात्समाहितः । स्वस्तिवाचनमत्रेष्ट सर्वेषामृद्धिकर्मणाम् ॥ १२ ॥ आदावन्ते प्रयोक्तव्यमिति मन्त्रविदां मतम् । जयन्तस्वामिना प्रोक्तमिदं तु स्वस्तिवाचनम् ॥१३॥(९६) इति स्वस्तिवाचनम् ॥

४ गर्भाधानप्रयोगः ।

जयन्तोक्तेन मार्गेण गर्भाधानमिहोच्यते । चतुर्थदिवसादूर्ध्वं मघामूलादि वर्जयेत् ॥ १ ॥ अलङ्कृते गृहे गन्धधूपमाल्यादिभिः शुभैः । ऋतुस्नातां शुभैर्गन्धमाल्यादिभिरलङ्कृताम् ॥ २ ॥ अलङ्कृतः स्वयं तद्वद्दारोप्य शयने शुभे । पेषयित्वाश्वगन्धाया मूलं शुद्धाम्बरे क्षिपेत् ॥ ३ ॥ ऋचोदीर्ष्वात इत्यस्या दक्षिणे नासिकापुटे । निष्पीड्य पिष्टं तन्मूलं वस्त्रसंशोधितं ततः ॥ ४ ॥(१००) इति गर्भाधानप्रयोगः ॥

५ पुंसवनप्रयोगः ।

तृतीये गर्भसंस्कारो मासि पुंसवनं भवेत् । आद्ये गर्भो न विज्ञातस्तृतीये मासि वै यदि ॥ १ ॥ चतुर्थे मासि कर्तव्य आद्यगर्भे स्मृतो विधिः । स्यादाभ्युदयिकं श्राद्धं गर्भिण्या एकभोजनम् ॥ २ ॥ "आदावन्ते प्रयोक्तव्यमित्यत्र स्वस्तिवाचने। आदिपदेन वृद्धिश्राद्धानन्तरं कर्मादौ स्वस्तिवाचनमिति। तथाच प्रयोगपारिजाते—'गर्भाधानादिसंस्कारेष्विष्टापूर्तक्रतुष्वपि । वृद्धिश्राद्धं पुरा कार्यं कर्मादौ स्वस्तिवाचनम् ॥' इति। कारिकाकारेणापि चौलादौ तथैव प्रयोगः प्रदर्शितः।

जयन्तेनापि तथैव पुसवनादौ दृश्यते । उपनयनादौ शौन कोपि—'अपरेद्यु कृतस्नानभूषणः स्वस्तिवाचनम्' इति । स्वस्तिवाचनप्रयोगेऽपि 'प्रस्तुत्य देवताया तु' इत्यनया का रिकया प्रधानकर्मनिष्ठा स्वस्तिवाचनस्याव्यवधानतैव बोधि ता । अतएव जयन्तादिभिर्विवाहे मधुपर्कानन्तरमेव स्वस्ति वाचन लिख्यते । अन्यच्च– आचार्येणापि शास्त्रेऽस्मिन्मङ्गला र्थमुदीरित । मङ्गल श्राद्धानन्तरमेव कर्तव्य भवतीति । अत्र कुलाचारमाप्त किंचिदुच्यते । पुसवनादावपि पूर्वेद्युर्गणपतिपू जनपूर्वक मातृकास्थापन चावश्यकत्वाच्छमीदूर्वाप्लक्षादिकुल वृक्षपल्लवादिभि॰ वंशपात्रे वस्त्रेण सह कुलदेवतास्थापनार्चनं च कृत्वा वृद्धिश्राद्ध कुर्यादिति । तथाच प्रयोगपारिजाते— श्राद्धे ह्यभ्युदये प्राप्ते देवतास्थापन स्मृतम् । ज्ञातिधर्मकुलश्रे णीलोकाना वृद्धिकारकम् ॥ तिस्र पूज्याः पितुः पक्षे तिस्रो मातामहे तथा। इत्येता मातर॰ प्रोक्ताः पितुर्मातुः स्वसा तथा॥ ब्रौम्हण्याद्यास्तथा सप्त दुर्गाक्षेत्रगणाधिपान् । (गौर्यादिषो डश इत्येके ) वृद्ध्यादौ पूजयित्वा तु पश्चान्नान्दीमुखान्पितॄन्॥' इति । 'कर्मादिषु तु सर्वेषु मातरः सगणाधिपाः । पूजनी याः प्रयत्नेन पूजिता॰ पूजयन्ति ताः ॥' इति । तदेव देवस्थाप नमित्युच्यते उपनयनादौ" । अथापरेद्युस्तिष्यर्क्षे पत्नी कृत्वा समीपत । आत्मनो दक्षिणे पार्श्वे प्रत्यगानडुहाजिने ॥ ३ ॥ गर्भिण्युपविशेत्स्नाता जयन्तवचन यथा । पूर्णपात्रनिधानान्त मन्वाधानादि पूर्ववत् ॥ ४ ॥ निर्वापप्रोक्षणे स्यातां प्रजाप तय इत्यथ । कृत्वाज्यभागपर्यन्तमवघातादि पूर्ववत् ॥ ५ ॥

१ पितुर्माता स्वसाष्टमी २ 'ब्राह्म्याद्याश्च तथा' इति स्यात् ।

समानरूपवत्साया गोर्दधि प्रसृतौ क्षिपेत्। तादृश्या गोरभावश्चेदन्यस्या गोर्दनि क्षिपेत्॥ ६॥ माषद्वयं यवं च त्रिः पृच्छेत्कि पिबसीति ताम्। त्रिः पुंसवनमित्युक्त्वा प्राश्यैव प्रसृतित्रयम्॥ ७॥ अण्डरूपेण माषौ स्तः शिश्नरूपेण वै यवः॥ ॥ ८॥ (१०८) इति पुंसवनम्॥

६ अनवलोभनप्रयोगः।

परिमण्डलगेहस्य छायायामुपवेश्य ताम्। सिचेद्दूर्वारसं त्वस्या दक्षिणे नासिकाविले॥ १॥ प्रजावज्जीवपुत्राभ्यां सूक्ताभ्यां वा तदिष्यते। अन्ये त्वाहुरिदं कर्म कृत्स्नं स्यात्परिमण्डले॥ २॥ एकदेशं चरोर्हुत्वा प्रजापतय इत्यथ। यत्ते सुशीम इत्यस्या हृदेशं पाणिना स्पृशेत्॥ ३॥ भवेत्स्विष्टकृदाद्यस्याः पतिर्वा देवरोऽपि वा। कर्ता स्याद्देवरस्तु तस्याः परयुरसभवे॥ ४॥ आवर्तत इदं कर्म प्रतिगर्भमिति स्थितिः॥ ५॥ (११३) इत्यनवलोभनम्॥

७ सीमन्तोन्नयनप्रयोगः।

चतुर्थे गर्भमासे तु सीमन्तोन्नयनं भवेत्। पूर्वस्यासभवे षष्ठे मासे यद्वाष्टमे भवेत्॥ १॥ पुनक्षत्रे सिते पक्षे त्वन्वाधानादि पूर्ववत्। पुनक्षत्राणि चेतानि तिष्यो हस्तः पुनर्वसु॥ २॥ अभिजिन्मोष्ठपाचैव अनूराधा तथाश्वयुक्। ऋक्षस्य मध्यमे पादद्वये कर्मेदमिष्यते॥ ३॥ प्राग्ग्रीवमूर्ध्वलोम स्यात्मत्यगानडुहाजिनम्। प्रोक्षणी स्रुवमासाद्य चमसं चाज्यभाजनम्॥४॥ इध्मावर्हिरयं प्रोक्तं आज्यहोमेष्वनुक्रमः। आज्यासादनपर्यन्तं पवित्रकरणादथ॥ ५॥ चर्मण्यथोपविष्टाया समन्वारभते पतिः। स्यादाज्यभागपर्यन्तमिध्माधानादि पूर्ववत्॥ ६॥ अष्टावाज्याहुतीर्हुत्वा मन्त्रैर्धाता ददात्विति। औदुम्बरः स्यात्स्तवकस्तदभावेऽन्यवृक्षजः॥ ७॥ फलवत्स्तवकौ ग्राह्यौ त्रि

शुक्ला शलली तथा । त्रीणि स्युः कुशपिञ्जूलान्येभिरेकीकृतैर
थ ॥ ८ ॥ ललाटे केशयोः सधिमारभ्य व्यूहन भवेत् । त्रि
र्व्यूहेदथ सीमन्तमामूर्ध्नो भूर्भुवःस्वरोम् ॥ ९ ॥ चतुर्वा व्यूह
न कार्य सूत्रकारवचो यथा । आवर्तते त्वय मन्त्र सर्वत्रैव प्र
तीयताम् ॥ १० ॥ समेक्ष्य सोम राजानमिति मैपेण गाथि
नौ । सोमो न इति गायेता तौ स्थानेऽसौपदस्य तु ॥ ११ ॥
समीपे या नदी तस्या नाम गङ्गे सरस्वति । ततः स्विष्टकृदा
दि स्यादीयते वृषभस्तत. ॥ १२ ॥ ब्रह्मणे तदभावे तु ब्राह्म
णेभ्यः प्रदीयते । यद्वोपदिशेद्वृद्धा ब्राह्मणी सधवप्रजा ॥१३॥
पत्नी कुर्यादिहापि स्यान्नान्दीश्राद्ध पुरैव तु । नावर्तत इद कर्म
प्रतिगर्भमिति स्थितिः ॥ १४ ॥ ( १२७ ) इति सीमन्तोन्न
यनप्रयोगः ॥

८ जातकर्मप्रयोग ।

जाते सुते पिता कुर्यान्नान्दीश्राद्ध विधानतः । प्राङ्नाभि
च्छेदनात्पुसः स्नानं कृत्वा सचैलकम् ॥१॥ जातकर्म तत'
कुर्यादन्यैरालम्भनात्पुरा । एकस्मिन्भाजने सर्पिर्मधु चैव स
मानयेत् ॥ २ ॥ अवघृष्य हिरण्येन ससृज्येरेखवा यथा । हि
रण्येन कुमार त प्राशयेन्मधुसर्पिषी ॥ ३ ॥ प्रते ददामि मन्त्रेण
मातुरुत्सङ्गसस्थितम् । हिरण्य दक्षिणे कर्णे निधायैतामृच ज
पेत् ॥ ४ ॥ मेधां त इति सव्ये च निधायैतामृच जपेत् । क्र
कक्रमेणास्य युगपदंसावभिमृशेदथ ॥ ५ ॥ प्रथमाश्मा भवेती
न्द्रश्रेष्ठानीत्यपरा तत' । तृतीयास्मै प्रिय धीति कुमार्याः स्याद
मन्त्रकम् ॥ ६ ॥ ( १३३ ) इति जातकर्म ॥

९ नामकरणप्रयोग ।

अनन्तरं दशम्यादौ यद्वा नामकृतिर्भवेत् । द्वादश्यां नामक
रण नान्दीश्राद्धे कृते सति ॥ १ ॥ पुंसा युग्माक्षराणि स्यु
र्विपरीतानि योषिताम् । पक्षे घोषवदित्यादिरेवकारादिना

इतः ॥ २ ॥ स्वस्त्यर्क्षं देवदत्ताय ब्रूतेति ब्राह्मणान्वदेत् । नामाभिवादनीयं तु पित्रोर्हृद्योपनीतित ॥ ३ ॥ ( १३६ ) इति नामकरणम् ॥

१० निष्क्रमणप्रयोग ।

चतुर्थे मासि पुण्यर्क्षे शुक्ले निष्क्रमणं भवेत् । स्नातं स्वलंकृतं चाभिहितस्वस्त्ययनं शिशुम् ॥ १ ॥ आदाय गेहान्निष्क्रम्य गच्छेयुर्देवतालयम् । अभ्यर्च्य देवता॰ सम्यगाशिषो वाचयेदथ ॥ २ ॥ कृत्वा प्रदक्षिणं गेहमानयन्ति तत' स्वकम् । मातृष्वसुर्गृहं यद्वा मातुलादिगृहं नयेत् ॥ ३ ॥ तदाशीर्वचनार्थं स्याद्दीर्घायुरभिवन्दितः । जयन्तस्य मतेनायं लिखितः शिशुनिष्क्रम॰ ॥ ४ ॥ ( १४० ) इति निष्क्रमणम् ॥

११ अन्नप्राशनप्रयोग ।

अथ पुण्येऽह्नि षष्ठे तु मासेऽन्नप्राशनं भवेत् । कृत्वाभ्युदयिकं श्राद्धं दधिमध्वाज्यसंयुतम् ॥ १ ॥ अन्नं त प्राशयेदन्नपत इत्यादिमन्त्रत । कर्मयोगेन वाजादिपक्षोक्तं प्राशयेद्द्विजः ॥ २ ॥ आजतैत्तिरमांसानां प्राशनं कामयोगतः । अमन्त्रकमिदं कुर्यात्प्राशनं योषितामपि ॥ ३ ॥ ( १४३ ) इत्यन्नप्राशनम् ॥

१२ चौल( चूडाकर्म )प्रयोग ।

तृतीये वत्सरे चौलं कुर्वीतास्योत्तरायणे । शुक्लपक्षे शुभर्क्षे तु कृत्वाभ्युदयिकं तथा ॥ १ ॥ यथान्वयं वा केषाचिदुपनीत्या सहेष्यते । स्वस्त्यादि वाचयेत्पूर्वं वृद्धिपूर्तेषु कर्मसु ॥ २ ॥ एतस्मिन्नेव काले स्याद्व्रतस्नातोपनयनम् । अन्यत्रापि विवाह' स्यादिति सूत्रकृतो मतम् ॥ ३ ॥ चौलकर्मोपनयने विवाह॰ प्रथमस्तथा । व्रतानि स्नानमित्येषां लौकिकोऽग्निरिति स्थितिः ॥ ४ ॥ पूर्णपात्रनिधानान्तमुपलेपादि पूर्ववत् । व्रीहिपूर्णं श

१ कृताभ्युदयिक

राव स्याद्यवपूर्णं तथाऽपरम् ॥ ५ ॥ माषपूर्णं तथान्यत्तिल पूर्णमथापरम् । एतानि च शरावाणि न्यसेदुत्तरतोऽनलात् ॥ ६ ॥ कुमारो मातुरुत्सङ्ग आस्ते मत्यग्घनिर्भुज॰ । अथानडु हमन्यस्मिञ्शरावे गोमय क्षिपेत् ॥ ७ ॥ शमीपर्णानि चान्य स्मिन्द्वे स्तो मातु' समीपत । मातुर्दक्षिणतो ब्रह्मा सप्त सप्त च सप्त च ॥ ८ ॥ कुशपिञ्जूलकानां तु गृहीत्वास्तेऽथवा पिता । कुर्यादाघारपर्यन्तमाज्यसेकादि पूर्ववत् ॥ ९ ॥ इदमादि वि वाहान्त नैवेष्टावाज्यभागकौ । अग्नआयूँषि तिसृभि र्मजापते न इत्यृचा ॥ १० ॥ स्रुवेणाज्याहुतीर्हुत्वा शीतोष्णाम्भस्यथा नयेत् । पश्चात्स्थित्वा कुमारस्य शीता उष्णाश्च ता अप ॥ ११ ॥ पाणिभ्यां भाजनेऽन्यस्मिन्युगपन्निनयेदथ । उष्णेन वाय उद केनेहीत्येतेन तद्भवेत् ॥ १२ ॥ एकदेश गृहीत्वासां नवनीत च वै ततः । दध्नो द्रप्सम्रुपादद्यं नास्ति चेन्नवनीतकम् ॥ १३ ॥ मदक्षिणं कुमारस्य शिरस्त्रि' क्लेदयेदथ । आरभ्य वामत॰ कर्ण प्रदेशात्क्लेदन भवेत् ॥१४॥ स्याच्चैतददितिः केशान्वपत्विन्या दिमन्त्रतः । निदध्यादोषधे त्रायस्वैनमित्यस्य दक्षिणे ॥१५॥ केशपक्षे कुमारस्य हृदय तत्कुशत्रयम् । पिञ्जूलेषु क्षुर न्यस्य स्व धिते मैनमित्यथ ॥ १६ ॥ अवपीडयतीत्यर्थः क्षुरस्ताम्रमयो भवेत् । येनावपदिति छिन्द्याच्छिन्नान्प्रागग्रकान्कुशान् ॥१७॥ एकीकृत्य शमीपर्णैस्ताश्च मात्रे प्रयच्छति । छेदन तु सकेशानां पिञ्जूलानां भवेदिह ॥ १८ ॥ निदधाति च सा माता तानान डुहगोमये । पूर्ववत्कुशपिञ्जूलनिधानादि समन्त्रकम् ॥ १९ ॥ येन धातेति मन्त्रोऽय छेदने तु विशिष्यते । तृतीये च चतुर्थे तु पिञ्जूलादि समन्त्रकम् ॥ २० ॥ तृतीये येन भूयश्च चतुर्थे च्छेदनं त्रिभिः । एवमेवोत्तरे पक्षे त्रिरेव छेदन भवेत् ॥ २१ ॥

१ १ प्रजापत इति त्यृचा, इति ऋचा २ सम भवेत्

यत्क्षुरेणेति मन्त्रेण क्षुरधारां निमाष्टर्यथ । आरभ्याग्रत आमूलप्रदेशान्तं निमार्जनम् ॥ २२ ॥ शीतोष्णाभिरिति प्रैषेणानु शिष्याच्च नापितम् । शिखा अपि च कर्तव्यास्तस्य स्वऋषिर्सख्यया ॥ २३ ॥ तत स्विष्टकृदादि स्यात्कुमार्य स्यादमन्त्रकम् । व्रीह्याद्पूर्णान्येतानि नापिताय प्रयच्छति ॥ २४ ॥(१६७) इति चूडाकर्मप्रयोग ॥

१३ उपनयन(मौञ्जी)प्रयोग ।

ब्राह्मणस्योपनयनमुक्ते काले भवेदथ । कृत्वाभ्युदयिकं श्राद्ध पूर्वेद्युरपरेऽहनि ॥ १ ॥ कृतस्नानमलङ्कुर्यादाशिषो वा चयेदथ । भुक्तभोज्यस्य शिरसो वपन स्नानमेव च ॥ २ ॥ एवभूत कुमार तमवस्थाप्यान्तिके ततः । ज्योति'शास्त्रविदुक्ते तु मुहूर्ते शोभने तत ॥ ३ ॥ आज्यसस्कारपर्यन्तमुपलेपादि पूर्ववत् । परिधान भवेदस्य वाससैवाहतेन तु ॥ ४ ॥ भवेत्प्रावरण वासः कृष्णाजिनमथापि वा । एवभूत कुमार त कुर्याद्यज्ञोपवीतिनम् ॥ ५ ॥ आचान्तमुत्तरेणाज्य यज्ञपात्राणि चानयेत् । अन्तरेणाग्निमात्मान दक्षिणे तूपवेशयेत् ॥ ६ ॥ बहिरास्तरणादि स्यात्सुवसमार्जनादिकम् । समन्वारब्ध एत स्मिन्ब्रह्मचारिण्यथेतर ॥ ७ ॥ कुर्यादाघारपर्यन्त चौलोक्ता ज्याहुतीरपि । अत्राज्यभागौ नैवेष्टावित्युक्त पूर्वमेव तु ॥ ८ ॥ अग्नेरुत्तरतस्तिष्ठेदाचार्यः प्राङ्मुखस्ततः । अकुर्वन्नात्मनोऽग्नेश्च व्यवाय गच्छतीतरः ॥ ९ ॥ आचार्यस्य पुरस्तात्तु तिष्ठेत्प्रत्यङ्मुखस्ततः । अव्यवायस्तु संस्कार कर्मस्वग्निकुमारयोः ॥१०॥ ब्रह्मचारिण आचार्य पूरयेदद्भिरञ्जलिम् । आचार्यस्याञ्जलि त्वन्यः पूरयेद्वै ततो गुरु ॥ ११ ॥ तत्सवितुर्वृणीत्यस्य निनीयाञ्जलिमञ्जलौ । अवक्षारयतीत्यर्थः स्वेन पूर्ण तमञ्जलिम् ॥ १२ ॥ देवस्य त्वेति गृह्णीयात्पाणिं साङ्गुष्ठमस्य च । अ-

सौस्थानेऽस्य नाम स्यादेवमुत्तरयोरपि ॥ १३ ॥ अप्पूरणा
दि तद्वत्स्यादन्यो मन्त्र करग्रहे । सविता ते हस्तमित्यप्पूरणा
दि तथा भवेत् ॥ १४ ॥ हस्तग्रहे तु मन्त्रोऽयमग्निराचार्य इत्य
थ। आचार्यो देवसवितरित्युक्त्वा रविमीक्षयेत् ॥ १५ ॥
कस्येति परिदायैन प्रजाधिपतये ततः । युवास्वर्धर्चेतः कुर्या
त्प्राङ्मुख दक्षिणावृतम् ॥ १६ ॥ अस्योपर्यसयो स्वस्य पाणी
कृत्वा हृदि स्पृशेत् । त धीरार्धर्चेतः कृत्वा ब्रह्मचार्यूहनोक्षणे
॥ १७ ॥ पर्यूहनवचश्चैतदुत्तरार्धमिति ब्रुवन् । अत्र पर्यूहनं
नास्तीत्याह हेतु च वृत्तिकृत् ॥ १८ ॥ तूर्णी समिधमादध्या
दग्नौ प्रादेशसमिताम् । एतयर्चाथवादध्यादग्नये समिध त्विति
॥ १९ ॥ स्पृष्ट्वाग्नि तेजसामेति त्ववमार्ष्टि ततो मुखम् । प्रक्षा
ल्य हस्तमनलमुपस्पृश्यावमार्ष्टयथ ॥ २० ॥ प्रक्षाल्य पूर्वव
त्स्पृष्ट्वा तृतीयमवमार्ष्टयथ । ओष्ठावलोमकौ कृत्वा सवृत्तौ त
स्त्रिमार्जनम् ॥ २१ ॥ एव त्रिरवमृज्याग्निमुपस्थाय मयीत्यथ ।
उपस्थाय मयीत्यादि षड्भिर्मन्त्रैर्विभुर्जम् ॥ २२ ॥ जान्वाच्य
दक्षिण पादावाचार्यस्योपगृह्य च । नाम्नाभिवादनीयेन शिर
स्वस्यावनम्य च ॥ २३ ॥ अधीहीत्यादिक मैष ब्रह्मचारी ब्र
वीत्यथ । ब्रह्मचारिणमाचार्यः परिधानीयवाससा ॥ २४ ॥
पाणिभ्या चात्मनस्तस्य पाणी गृह्णात्यत. परम् । ॐ भूर्भुव.
स्वःपूर्वा तु सावित्री वाचयेदथ ॥ २५ ॥ पाद पाद च सा
वित्र्या' स्वयमुक्त्वैव वाचयेत् । ततस्त्वर्धर्चमर्धर्च सर्वा तामथ
वाचयेत् ॥ २६ ॥ एव वक्तुमशक्तश्चेत्तं यथाशक्ति वाचयेत् ।
स्थापयेद्धृत्समीपेऽस्य ममेत्यूर्ध्वाङ्गुलिं करम् ॥ २७ ॥ आ
बध्य मेखलां मौञ्जीं दण्ड दत्त्वोक्तमानत. । आदिशेद्ब्रह्मचर्य
च साम्प्रत ब्रह्मचार्यसि ॥ २८ ॥ अपोशानेति सूत्रादावुक्तमा
चमनं कुरु । कर्म कुर्विति संध्यादि विहितोपासनादिकम्

॥ २९ ॥ दिवा मा स्वाप्सीरित्यस्य दिवा निद्रां न कुर्विति। आचार्याधीन इत्यस्य मयानुज्ञात एव सन्॥ ३० ॥ अशान यद्वा कर्मान्यत्तत्सर्वं मन्नुज्ञया। मन्त्रराशिमधीप्व त्व ब्राह्मणानि समाप्ति ॥ ३१ ॥ प्रैषार्थमेवमुक्त्वाथ कालमेक च निर्दिशेत्। परिषेचनपर्यन्त कुर्यात्स्विष्टकृदादिकम्॥ ३२ ॥ अ प्रत्याख्यायिन पूर्वं याचेद्भिक्षां भवानिति। भवतीति ब्रुवन्या चेदप्रत्याख्यायिनी यदि॥ ३३ ॥ त्रीह्यद्यन्यतमं लब्ध गुरवे वेदयीत तम्। अद्द शेष ततस्तिष्ठेत्साय सध्यामुपास्य च॥३४॥ पूर्णपात्रनिधानान्तमुपलेपादिपूर्ववत्। विमार्गा भोजनयाल तूष्णीं निर्वाप्य याचितम्॥ ३५ ॥ तूष्णीं प्रोक्ष्यावघातादि श्र पणान्तं करोत्यथ। आचार्याय शृत' स्थालीपाकस्त्विति नि वेदयेत्॥ ३६ ॥ अन्वारब्धे गुरुः कुर्यादाघारान्तमतः परम्। अत्राज्यभागौ नैवेष्टौ चतुर्थमिति यन्नत. ॥ ३७ ॥ चर्वाहुति त्रय हुत्वा सदसस्पतिमित्यृचा। ऋचा तत्सवितुस्त्वद्वदपिभ्य इति मन्त्रत' ॥३८॥ कुर्यात्स्विष्टकृदाद्यन्ते चान्नेन द्विजभोजनम्। अस्याशक्तौ करोत्यन्य' श्रपणान्तमिति स्थितिः॥३९॥ द्विजान्भुक्तवतो वेदसमाप्तिं वाचयेदथ। क्षारादिवर्जमश्नीयाद्ब्रह्मचारी दिनत्रयम्॥ ४० ॥ शयीताधश्चतुर्थेऽह्नि मेधाजननमाचरेत्। यथा द्वादशरात्र स्याद्वतमब्दमथापि वा॥ ४१ ॥ तदा त दन्त एव स्यान्मेधाजननकर्म च। आग्नेयी दक्षिणा मत्यग्दक्षिणा निन्दिता दिशः॥४२॥ अनिन्दितायामन्यस्यां पलाश शाखवर्जितम्। तस्याभावे सशाख वा गुणस्तम्बमथापि वा॥४३॥ त्रि. प्रदक्षिणमुक्षन्तमम्भः कुम्भेन त वटुम्। आचार्यो वाचयेन्मन्त्र सुश्रव.सुश्रवा इति ॥ ४४ ॥ तत्रैव मेखलादीनि व्युदस्यान्यानि धारयेत्। वेदान्तरमधीत्यैनमृग्वेद यस्त्वधीयते ४५ उपनीतिरिय तेषामलकरणवर्जिता। यदैतदुपनीतस्य प्रायश्चि-

त्त तदा भवेत् ॥ ४६ ॥ कृताकृतं तु वपनं मेधाजननमेव च। मेधाजननसद्भावे व्रतचर्या भवेदिह ॥ ४७ ॥ अनुप्रवचनीयश्च तदभावे द्वय नच । परिदान न कार्यं स्यान्निमित्तानन्तर त्विदम् ॥ ४८ ॥ पूर्वस्या वाचयेत्स्थाने तत्सवितुर्वृणीमहे। भणितोऽत्र विशेषोऽय समानमितरद्भवेत् ॥ ४९ ॥ भिक्षेतान्न दिवारात्रावाचार्यायात्मतुष्टये । अग्निकार्य च भिक्षायाः मा गूर्ध्व वा तदुच्यते ॥ ५० ॥ पर्युहनोक्षणे स्यातामादावन्ते च कर्मण। तूर्णी समिधमित्यादि ह्युपस्थानान्तमेव च ॥ ५१ ॥ वेदस्वीकरण यावत्तावदेव समाचरेत् । अथवा द्वादशाब्द स्याद्ब्रह्मचर्यमिति स्थितिः ॥ ५२ ॥ सावित्र्या ब्रह्मयज्ञोऽपि तस्य तावदुपाकृतेः ॥ ५३ ॥ ( २१९ ) इत्युपनयनम् ॥

१४ महानाम्नीव्रतम् ।

महानाम्न्यादि कर्तव्य तत्तत्काले व्रतत्रयम् । उक्ते काले ददाम्यन्त वापनाद्युपनीतिवत् ॥ १ ॥ नवां मौञ्जीं नव दण्ड दत्त्वा स्विष्टकृदाद्यथा । सवत्सर चरेदेव पूर्णेऽब्दे तूत्तरायणे ॥ २ ॥ शुक्लपक्षे बहिर्ग्रामाद्विविक्त देशमेत्य च । पूर्णपात्रनि धानान्तमुपलेपादि पूर्ववत् ॥ ३ ॥ स्वस्याल शुक्तये तूर्णी नि रूप्य प्रोक्ष्य तत्र च । तिलानोप्य पचेत्पक्वमाचार्याय निवेद येत् ॥ ४ ॥ पृच्छति व्रतलोपान्स्व दत्ते प्रतिवचस्तथा । बहवो व्रतलोपाश्चेत्पुनरावर्तयेद्व्रतम् ॥ ५ ॥ लोपेष्वापत्प्रयुक्तेषु पुन नावर्तयेद्व्रतम् । तेनान्वारब्ध आचार्य इ्माधानादि पूर्ववत् ॥६॥ हुत्वाग्नावग्निरित्यादिमन्त्रैश्चर्वाहुतीरथ । तत स्विष्टकृतो ऽवद्येच्छेष भूमौ निधाय च ॥ ७ ॥ एतमित्याद्यशानान्तमाह मैषमतः परम् । शुक्तवन्त तमाचान्तं जलपूर्णाञ्जलि ततः ॥८॥ त्व व्रतानां व्रतेत्यादि शुक्तवन्त दिवाकरम् । उपस्थाप्याय

१ तदिष्यते

कुर्वीत मीलिताक्ष च वाग्यतम् ॥ ९ ॥ त्रिः प्रदक्षिणमावेष्ट्य वाससा समुखं शिर'। उक्त्वैकरात्रमित्यादि मैषं स्विष्टकृदाय-थ ॥ १० ॥ आवश्यकेभ्य इतरच्छयन स्नानभोजनम् । अकुर्वे-कैकरात्र च ब्रह्मचारी नयेदथ ॥ ११ ॥ श्व ईशान्या निधा-नाग्न्याथर्वाग्रग्रेस्तृणेषु तु । ईशान्यग्रेपूपविशेदीक्षमाणस्तु ता दिशम् ॥ १२ ॥ शिष्योऽपि स्वमुख प्रक्षाल्याग्याचार्यो प्र दक्षिणम्। कृत्वाचार्यस्य सगृह्य पादौ तेषु तृणेषु तु ॥ १३ ॥ ईक्षमाणो दिश मत्यग्दक्षिणामुपविश्य च। स्वेन पृष्ठेन तत्पृष्ठ सदधाति ततः परम् ॥ १४ ॥ मनसाह महानाम्नीर्भो अनुब्रू हि तं गुरुम्। पृच्छेचदहरुत्पन्नान्व्रतलोपास्ततो गुरु. ॥ १५ ॥ स्वय समीलन कुर्वन्महानाम्नीर्ऋचो गुरु.। त्रि. पुरीषपदैरुक्त्वा तस्योष्णीष विमोचयेत् ॥ १६ ॥ ईक्षयेदर्कमीक्षेत मित्रस्येति द्वयेन तु। ससभारा दिशो वीक्ष्य मित्रस्य च इति स्वय ॥ १७ ॥ मित्रस्येति चतुर्थेन पुनरादित्यमीक्षयेत् । ईक्षणेऽर्के दिशा मन्त्रा ब्रह्मचारिण एव तु ॥ १८ ॥ मन्त्रान्ते कर्म कर्त व्यं सर्वत्र करणत्वत.। उक्त्वा चाग्न इळेत्यादीन्मन्त्रान्भूमि मुपस्पृशेत् ॥ १९ ॥ अनुप्रवचनीयश्च कार्योऽय भेद उच्यते। महानाम्नीभ्यः स्वाहेति साविञ्या, स्थान इष्यते ॥ २० ॥ (२३९ ) इति महानाम्नीव्रतम् ॥

१५ उपनिषद्व्रतम् ।

महाव्रतमिद प्रोक्त वक्ष्येऽथोपनिषद्व्रतम्। पूर्ववद्व्रत आदिष्टे चरेदब्दमिदं व्रतम् ॥ १ ॥ श्रावयित्वोपनिपदमादित्यावेक्षणा दि च। अत्रोपनिषदे स्वाहा साविञ्या स्थान इष्यते ॥ २ ॥ ( २४१ ) इत्युपनिषद्व्रतम् ॥

१६ गोदानव्रतम् ।

गोदानं चौलवत्कार्यं षोडशेऽब्दे तदुच्यते। अह्नोपवेशन नास्ति श्मश्रूणां वापनं भवेत् ॥ १ ॥ अदिति. श्मश्रूणि वप

त्वाप उन्दन्तु वर्चसे। पिञ्जूलादिनिधानं च श्मश्रुपक्षे भवेदि
ह ॥ २ ॥ निमार्जने विशेषोऽयं श्मश्रूणीति शिरो मुखम्।
शासने नापितस्याय विशेषः प्रैष उच्यते ॥ ३ ॥ केशश्मश्रुलो
मनखान्युदक्सस्थानि कुर्विति। स्नात्वा च वाग्यतस्तिष्ठन्नहः
शेषं नयेदथ ॥ ४ ॥ आदित्येऽस्तमिते वाचं विसृजेतान्तिके
गुरुः। उक्त्वा वरं ददामीति दद्याद्गोमिथुनं ततः ॥ ५ ॥ श्वः
पूर्ववद्व्रतादेशः सवत्सरमिदं चरेत्। व्रतेष्वेतेषु सर्वेषु प्रसिद्धं
केशधारणम् ॥ ६ ॥ ( २४७ ) इति गोदानव्रतम् ॥

१७ समावर्तनप्रयोग ।

गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया। वेदं व्रतानि वा
पारं नीत्वा ह्युभयमेव वा ॥ १ ॥ व्रतपक्षेऽपि शब्दार्थमारण्या
ध्ययने कृते। विद्यान्ते गुरुमाहाह किमर्थं करवाणि ते ॥ २ ॥
यमर्थमाह तं कृत्वा ततोऽनुज्ञामवाप्य[१] च। आचार्यायात्मने
चैव मण्यादीन्युपकल्पयेत् ॥ ३ ॥ आचार्यायैव कल्प्यानि न
लभेतोभयोर्यदि। कुर्वीत स्वयमेवेदं समावर्तनसञ्ज्ञकम् ॥ ४ ॥
प्राप्योदगयनाद्युक्तमुक्तस्वस्त्ययनः स्वयम्। प्रागुदीचीं दि
शं गच्छेत्तस्यां वै यज्ञियस्य तु ॥ ५ ॥ शाखेशानी गता त
स्याश्छित्त्वा प्रादेशसमिताम्। आहृत्य समिधं भूमेरन्यत्र नि[२]
दधाति ताम् ॥ ६ ॥ दत्त्वा गा भोजयेद्विप्रान्गोदानोक्तं करो
त्यथ। स्नात्वा वाग्यत इत्यादि न कार्यमिह कर्मणि ॥ ७ ॥
पदान्यूह्यानि वत्त्यत्र वाच्यं त्रायस्व मामिति। मा मा हिंसी
रिति ब्रूयाद्यथासमिति चापरम् ॥ ८ ॥ तेन म आयुषेत्येवमूह्य
मन्त्रद्वयेऽपि च। माम आयुरिति त्वन्यत्सर्वं गोदानवद्भवेत्
॥ ९ ॥ करञ्जबीजमत्रैकं पिष्टेनोन्मृज्य तेन तु। शीतोष्णैः स्ना
त आचान्तो वह्नेर्गत्वान्तिकं पुनः ॥ १० ॥ युवमित्यनया व

१ मवाप्यथ २ निददाति

स्त्रे आच्छाद्यावर्तयेत्त्वियम् । मन्त्रावृत्तिरियं दृष्टा वृत्तौ नारायणस्य तु ॥ ११ ॥ आचम्य चाश्मनस्तेज इत्युक्ते सव्यमीक्षणम् । एतेनैव तु मन्त्रेण पश्चाद्दक्षिणमीक्षणम् ॥ १२ ॥ कुण्डले चाश्मनस्तेज इति श्रोत्रमलङ्कुरु । अनेनैव तु मन्त्रेण पश्चात्सव्यमलङ्कुरु ॥ १३ ॥ कुङ्कुमाद्यनुलिप्ताभ्यां पाणिभ्यां पूर्वमाननम् । अनुलिप्येतराङ्गानि पश्चात्प्रक्षालयेत्करौ ॥ १४ ॥ अनार्तासीति मन्त्रेण बध्नाति शिरसि स्रजम् । सकृदुक्तेन मन्त्रेण देवानामित्युपानहौ ॥ १५ ॥ आस्थाय छत्रमाद याद्विश्छ्रयासि मन्त्रतः । गृहीत्वा वैणवं दण्डं वेणुरस्यादिमन्त्रत ॥ १६ ॥ आयुष्यमिति सूक्तेन मणिं कण्ठे प्रबध्य च । सुवर्णमय इष्टोऽत्र मणिरित्याह वृत्तिकृत् ॥ १७ ॥ नवाम्बरेण संवेष्ट्य शिरोऽथोपानहौ त्यजेत् । आहृतां समिध तिष्ठन्नग्नावाधाय मन्त्रत॥१८॥ स्मृत च म इति ब्रूयादस्मृतं च म इत्यपि । तस्योपरि वदेत्तन्म उभयव्रतमित्यथ ॥ १९ ॥ द्वादशाप्येवमेवोक्त्वा यथापाठमथोत्तरम् । मन्त्रेणैवविधेनाग्नावाहितायां समिध्यथ ॥ २० ॥ उपविश्य दशाढ्यादन्या[1] प्रादेशसमिता[1] । अत्रोपवेशनं प्राह वृत्तिकार. सहेतुकम् ॥ २१ ॥ मम्रोग्ने दशभिः कुर्वन्स्वाहाकारमृगन्ततः । परिषेचनपर्यन्त कुर्यात्स्विष्टकृदादिकम् ॥ २२ ॥ ततः सकल्पयेन्नक्त न स्वामीत्युत्तराण्यपि । दास्यन्ति मधुपर्कं ये तत्रैतां रजनीं वसेत् ॥ २३ ॥ ( २७० ) इति समावर्तनम् ॥

१८ स्नातकगमनविधानम् ।

अथ शिष्य' समावृत्तो नामोपांशु गुरोर्वदेत् । उच्चैरूर्ध्व वदेत्स्थाने इदमस्त्वेष्टमाश्रमम् ॥ १ ॥ हे देवदत्त गार्हस्थ्य वत्स्यामो भो इति त्वथ । उपांशु जपति प्राणापानयोरिति वै ततः ॥ २ ॥ आमन्द्रैरित्यृचं चाथ गुरुश्चैतौ जपत्यथ । ॐ प्रागि

---

१ दृष्ट्वा

त्यादिक मन्त्र जपित्वाचार्य एव तु ॥ ३ ॥ सूक्तेन तु महि त्रीणामवोस्त्वित्यनुमन्त्र्य तम् । वत्स्यथेत्यनुजानीयादनुज्ञातो यदा पथि ॥ ४ ॥ गच्छञ्शृणोति वाक्यानि पक्षिणाममिया णि तु । जपेत्कनिक्रदत्सूक्त देवी वाचमृच तथा ॥ ५ ॥ शि वादेरमिय श्रुत्वा स्तुहिश्रुतमृच जपेत् । यस्यां दिश्यथवा य स्मात्पुरपाद्याग्रतोऽपि वा ॥ ६ ॥ विभेत्युभयतो दीप्तमुल्मुकं ता दिश क्षिपेत् । मन्त्रेणाभयमित्यादिनैनदुल्मुकमस्यति ॥७॥ सर्वतोभयमुत्पन्न नच ज्ञातमतो नरात् । अन्यतो वेत्ति लोका श्वावाघारान्त करोत्यथ ॥ ८ ॥ पृथिव्याद्यष्टभिर्मन्त्रैर्हुत्वाष्टा ज्याहुतीरथ । स्थित्वैशान्यां जपेत्स्वस्ति नोमिमीर्तां तु सप्त वै ॥ ९ ॥ षळृचो जपति त्वन्या यत इन्द्र भयामहे । ततश्च स्वि ष्टकृद्वर्ज होमशेष समापयेत् ॥ १० ॥ ( २८० ) इति स्नातक गमनविधिः ॥

१९ विवाहाङ्गो मधुपर्कः ।

यथोक्तलक्षणां कन्यामुक्ते काले समुद्वहेत् । स्यादाभ्युदयि क श्राद्ध द्वितीये वक्ष्यते च तत् ॥ १ ॥ अपरेद्युः कृतस्नानो ऽहतवस्त्रधृतो वरः । स्वलकृतः सितच्छत्रो पदातिर्ज्ञातिबान्धवैः ॥ २ ॥ वृतो वधूगृह गत्वा मधुपर्केण पूजितः । कन्याज्ञाति भिरत्रैव मधुपर्को मयोच्यते ॥ ३ ॥ विष्टराद्युपकल्प्यैनमुपवे श्यासने शुभे । तत्रोपकल्पित पूर्व विष्टरं त्रिर्निवेदयेत् ॥ ४ ॥ उत्तराग्रे त्वह वर्ष्मेत्यस्मिन्नुपविशेद्वरः । एवमेवोत्तरेषां च प श्चानां त्रिर्निवेदनम् ॥ ५ ॥ निवेदितेन पाद्येन पादौ प्रक्षा लयेद्वरः । प्रक्षालयित्रे विप्राय दक्षिणाङ्घ्रिं प्रयच्छति ॥ ६ ॥ पश्चात्सव्य तु शूद्राय पूर्व सव्य प्रयच्छति । गन्धादियुक्तमर्घ्य च प्रतिगृह्य निवेदितम् ॥ ७ ॥ वेदिताचमनीयापामेकदेशं त-

१ स्नातो

तो वर. । उक्त्वामृतोपस्तरणमसिमन्त्र पिबेदथ ॥ ८ ॥ शौचार्थाचमनं कार्यमेवेति प्राह वृत्तिकृत् । अवान्तरेण शौचार्थं सर्वमाचमन त्विह ॥ ९ ॥ आनीयमानमीक्षेत मित्रस्य त्वेति मन्त्रत । मधुपर्कमथानीत पूर्ववच्च निवेदितम् ॥ १० ॥ देवस्य त्वेति मन्त्रेण गृह्णात्यञ्जलिना तत. । मधुवातास्तृचेनैनं मधुपर्कमवेक्षते ॥ ११ ॥ निदधाति च तत्पात्रं सव्ये पाणावित.प-रम् । अङ्गुष्ठोपकनिष्ठाभ्यामालोड्य त्रि. प्रदक्षिणम् ॥ १२ ॥ वसवस्त्वादिभिर्मन्त्रैर्दिक्षु पूर्वादिषु क्रमात् । निमृज्याङ्गुलिलेप तु भूतेभ्यस्त्वेति मन्त्रत' ॥ १३ ॥ त्रिरुद्धृत्य त्रिरुत्क्षिप्य भूमौ पात्रं निधाय च । प्राश्नात्यस्यैकदेशं तु विराजोदोह इत्यथ ॥ १४ ॥ आचम्य पूर्ववत्प्राश्य विराजो दोहमित्यथ । आचम्य तद्वत्प्राश्नीयान्मयि दोह इति त्वथ ॥ १५ ॥ विनियोग च कुर्वीत शिष्टस्यास्योक्तमार्गत । आचम्याथामृतापीति पिबेदाचमनीयकम् ॥ १६ ॥ आचम्याचमनीयाम्बु पिबेत्सत्यं यशस्त्विति । आचान्तः पुनराचामेदथ गां त्रिर्निवेदयेत् ॥ १७ ॥ ततो वरो जपेन्मातारुद्राणां दुहितेत्यृचम् । अथोमुत्सृजतेत्याह मैप गामुत्सृजन्ति च । गन्धमाल्याम्बरैस्तद्वद्भूषणै. पूजयेद्वरम् ॥ १८ ॥ ( २९८ ) इति मधुपर्क. ॥

२० कन्यादानविधौ क्षेपकश्लोका ।

"स्नातालकृतकन्यायाः प्राङ्मुख्याः प्रत्यगाननः। ईक्षेत तण्डुलस्थाया वरस्तस्य मुख च सा ॥ १ ॥ मुहूर्ते शोभने सम्यक् क्षिपेतामुभयोर्मिथ. । सगुडाञ्जीरकान्कन्यां वरयेदथ तां वर' ॥ २ ॥ असावमुकगोत्रस्य पुत्र. पौत्रः प्रपौत्रकः । एतद्गोत्रामिमामस्य पुत्रीं पौत्रीं च नप्त्रिकाम् ॥ ३ ॥ वृणेऽहं कन्यकां साध्वीं श्रीरूपामित्यतः परम् । वरेणैव वृतां कन्यां

१ आह

तत्पिता प्रददाति ताम् ॥४॥ पुत्रायास्य च पौत्राय नप्त्रे चा
मुकगोत्रिणे। अमुष्मा अमुकगोत्राय पुत्रीं पौत्रीं प्रपौत्रिकाम्
॥ ५ ॥ श्रीरूपां च मया दत्तां तुभ्यं श्रीधररूपिणे। इत्युक्त्वो
दकपूर्वां तां दद्यात्स्वस्तिपदं वदेत् ॥ ६ ॥ वरोऽथ प्रतिगृह्णी
यात्स्पृशेत्क इति मन्त्रत॰। अस्मिन्नहनि यत्किञ्चित्कन्यादाता
ततः परम् ॥ ७ ॥ गोभूहिरण्यदास्यादि तस्मै दद्यात्स्वशक्ति
तः। सघृतं क्षीरमादाय कराभ्यां कन्यकाञ्जलिम् ॥ ८ ॥ द्वि
रुन्मृज्य वरः सिक्ताऽऽत्मुक्ताञ्शाल्यक्षतानथ। गृहीत्वाञ्जलिना
तस्या अञ्जलौ द्विः क्षिपेत्ततः ॥ ९ ॥ आदायाञ्जलिमाधत्ते त
दञ्जल्युपरि स्वयम्। कन्येत्याद्याशिषः पूर्वमुक्त्वा दाता तत॰
परम् ॥ १० ॥ कन्यां त्वां प्रतिगृह्णात्वित्यन्त क इति मन्त्रतः।
उपरिस्थाञ्जलौ पूर्णे हरेत्स्वर्णोदकं ततः ॥ ११ ॥ तमेव प्रति
गृह्णामीत्यन्त मन्त्रमुदीरयेत्। अञ्जलिस्थाक्षतान्कन्यामूर्धनि प्र
क्षिपेद्वरः ॥ १२ ॥ स्वाञ्जलिस्थाक्षतान्कन्या वरमूर्ध्नि विनि
क्षिपेत्। मूर्ध्निक्षेपान्तमेव स्यात्पुनरुन्मार्जनादिकम् ॥ १३ ॥
उन्मार्जनादिकं कुर्यात्पूर्ववत्क॰यका वरे। कन्येत्यादि पिता कु
र्याद्वरतत्र वरो वदेत् ॥ १४ ॥ कन्याशिरस्थमाल्यस्य गृहीत्वा
कौसुमं दलम्। सघृत क्षीरसमिश्र कुर्यात्तिलकमुत्तमम् ॥१५॥
वर॰ कन्याललाटे च कन्या वरशिरस्स्रजः। पुष्पस्य दलमादा
य क्षीराज्याक्त वरस्य तु ॥ १६ ॥ ललाटे तिलकं कुर्यादी
क्षेतैव मिथो मुखम्। कण्ठे मिथः शुभे माल्ये दम्पती प्रतिमु
ञ्चतः ॥ १७ ॥ बद्ध्वा वस्त्रान्तमुभयोः प्राङ्मुखौ च तत॰ परम्।
देवीं दाक्षायणीं नत्वा सर्वसंपत्प्रदायिनीम् ॥ १८ ॥ होम
देशे व्रजेतां तौ परिगृह्य करौ मिथ॰। तदेतत्सूत्रकृद्वृत्तिसूत्रेणो
क्तावचोदितम् ॥ १९ ॥ कन्यां कनकसंपन्नां कनकाभरणैर्युं

१ 'भवा कन्या प्रगृह्णात' इति स्यात

ताम्। दास्यामि विष्णवे तुभ्य ब्रह्मलोकजिगीषया ॥ २० ॥ विश्वम्भर सर्वभूताः साक्षिण्यः सर्वदेवताः। इमां कन्यां प्रदास्यामि पितॄणां तारणाय च ॥ २१ ॥ गौरीं कन्यामिमां विप्र यथाशक्ति विभूषिताम्। गोत्राय शर्मणे तुभ्य दत्तां विप्र समाश्रय॥ २२॥ कन्ये ममाग्रतो भूया, कन्ये मे देवि पार्श्वयोः। कन्ये मे पृष्ठतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम् " ॥ २३ ॥ इति शिष्टश्लोका ॥

२१ कन्यादानम्।

स्नातां नवाम्बरोपेतां कटकादिविभूषिताम्। अवरप्रत्तवसनपरिधानां कुमारिकाम् ॥ १ ॥ उक्तस्वस्त्ययनां दद्याज्जल पूर्वं वराय ताम्। उक्तस्वस्त्ययन, स्थित्वा प्राङ्मुखं परिगृह्य ताम्॥ २ ॥ ( ३०० ) इति कन्यादानम् ॥

२२ विवाहहोमप्रयोग।

आत्मनो दक्षिणे पार्श्वे वधू तामुपवेश्य च। उपलेपादि कुर्वीत हविर्भुक्स्थापनान्तकम् ॥ १ ॥ अग्नेः पश्चात्प्रतिष्ठाप्य दृषद सोपलामथ। उदकुम्भ निधायाग्ने' प्रागुदीच्यामतः परम् ॥ २ ॥ आज्याधिश्रयणान्त स्यादन्वाधानादि पूर्ववत्। आज्येन सह लाजानां पर्यग्निकरण भवेत् ॥ ३ ॥ त्रिः प्रोक्षण भवेत्तेषा केवलोत्पवने सति। इध्माभिघारणान्तं स्यादाज्याद्युद्वासनादिकम्॥ ४॥ वधूदक्षिणहस्तेन समन्वारब्ध एव सन्। कुर्यादाघारपर्यन्त चौलोक्ताज्याहुतित्रयम् ॥ ५ ॥ अत्राज्य भागौ नैवेष्टावित्युक्त पूर्वमेव तु। हुत्वा त्वमर्यमेत्यन्यां प्रजापत इतीतराम् ॥ ६ ॥ अथोन्नतमुखीं कुर्याज्जयावनतानना-म्। प्राङ्मुख्या उपविष्टायास्तिष्ठन्प्रत्यङ्मुखः स्वयम् ॥ ७ ॥ उत्तानेनाथवा नीचेनोत्तानस्य करस्य तु। अङ्गुष्ठादि तु गृह्णीयाद्दृष्णामीलेतया ततः॥ ८॥ उपस्तृणाति भार्याया अञ्जलौ

प्रोषिते वरः । वधूभ्राताथवा भ्रातृस्थानो लाजान्द्विरावपेत्
॥ ९ ॥ पश्चावत्ती वर' स्याच्चेदञ्जलौ तान्द्विरावपेत् । भ्रातृस्था
नः पितृव्यस्य मातुलस्य च यः सुतः ॥ १० ॥ मातृष्वसुः सुत
स्तद्वत्सुतस्तद्वत्पितृष्वसुः । वरः शूर्पगतांल्लाजानवत्तांश्चाभिघा
रयेत् ॥ ११ ॥ पठेच्चार्यमण मन्त्रमथ पत्नी स्थिता सती । कुर्व
त्यञ्जल्यविच्छेदमञ्जल्यग्रैर्जुहोति ताम् ॥ १२ ॥ हविर्युगम्भः
कुम्भौ तु दृषदूर्ज मदक्षिणम् । वधू परिणमन्मन्त्रममोहमिति
वै जपेत् ॥ १३ ॥ इममश्मानमारोहेत्येतेन प्राङ्मुखी वधूम् । उ
भाभ्यामपि पादाभ्यामारोप्य दृषद पुनः ॥ १४ ॥ उपस्तृ
त्यादि तद्वत्स्याद्दृषदारोपणान्तकम् । वरुण न्विति होमोऽञ्जल्यु
पस्तृत्यादि पूर्ववत् ॥ १५ ॥ अश्मारोहणपर्यन्त हवन पूषण
न्विति । प्रजापति चतुर्थ्यन्त स्वाहायुक्त वरः स्मरेत् ॥ १६ ॥
शूर्पकोणेन शिष्टांस्तानभ्यात्म जुहुयाद्वधू' । जयन्तस्त्वाह ह
वन चतुर्थ वरकर्तृकम् ॥ १७ ॥ यदि बद्धे शिखे बध्वा देशध
र्मादिना ततः । प्र त्वा मुञ्चामि मन्त्रेण दक्षिणा तु विमुञ्चति
॥ १८ ॥ मेतो मुञ्चामि मन्त्रेण तूत्तरामपि मुञ्चति । शिखे
वरस्य बद्धे चेत्तूष्णीमेव विमुञ्चति ॥ १९ ॥ अभ्युत्क्रमयतीशा
न्यां वधू सप्तपदानि च । सा चाभ्युत्क्रामयेत्पूर्व दक्षिण पाद
मात्मनः ॥२०॥ इष इत्यादिभिर्मन्त्रैरनुषक्तैर्भवादिना । सप्तमे का
मिते तत्स्थः शिरसी सनिधाय च ॥ २१ ॥ अम्भःकुम्भाम्भसा
ते च शिरसी अवसिञ्चति । आज्येन स्विष्टकृद्धोम कृत्वा शेष
समापयेत् ॥ २२ ॥ होमादारभ्य यच्छेत्सा वाच दृष्ट्वा ध्रुवा-
दिकान् । जीवपत्नीति सा वाच विसृजेच्च ततः परम् ॥ २३ ॥
दम्पत्योरत आरभ्य गृहवेशीयहोमतः । ऊर्ध्व त्रिरात्रमथवा
द्वादशाहं भवेद्व्रतम् ॥ २४ ॥ अब्द वा क्षारलवणवर्जितं भो
जनं भवेत् । अधश्च शयनं तद्वद्ब्रह्मचर्यं च वै भवेत् ॥ २५ ॥
( ३२५ ) इति विवाहहोमः ॥

२३ गृहप्रवेशः ।

विवाहानन्तरं गच्छेत्सभार्यं स्वस्य मन्दिरम्। यदि ग्रामा न्तरे तत्स्यात्तच्च यानेन गम्यते ॥ १ ॥ पूषा त्वेत्यनया यानं वधूमारोपयेद्वर.। दम्पत्योरग्रतोऽजस्रं विवाहाग्निं नयन्ति च ॥ २ ॥ गृहान्निर्गच्छतोरेव स्वग्रामेऽपि भवेद्विधिः। ब्राह्मणी जीवपत्नी या जीवपत्या च तद्गृहे ॥ ३ ॥ वसेदनन्तरां रात्रीं स्वग्रामे नैतदिष्यते। यद्यन्तरास्ति नद्यादि नावमारुह्य याति चेत् ॥ ४ ॥ अश्मन्वतीत्यृचोऽर्धेन नावमारोहयेद्वधूम्। अर्धे नोत्तरेणैनां जलादुत्तारयेदथ ॥ ५ ॥ नीयमाना वधूर्बन्धु वियोगाद्यदि रोदिति। जपेज्जीवं रुदन्त्येतामेकग्रामेऽप्ययं विधिः ॥ ६ ॥ जपेच्छोभनदेशादौ माविदन्परिपन्थिनः। सु-मङ्गलीरिति चेक्षेत वासे वासे समीक्षकान् ॥ ७ ॥ इह प्रियमृचा भार्यां स्वस्य गेहे प्रवेशयेत्। उपलेपादिकं कृत्वा विवाहाग्निं समिध्य च ॥ ८ ॥ प्राग्ग्रीवमूर्ध्वलोमाग्नेः प्रत्यगानडुहाजिनम्। आज्यासादनपर्यन्तमन्वाधानादि पूर्ववत् ॥ ९ ॥ चर्मण्यथोप-विष्टाया समन्वारब्ध एव सन्। कुर्यादाघारपर्यन्तमिध्माधाना दि पूर्ववत् ॥ १० ॥ ऋग्भिश्चतसृभिश्चान प्रजामित्यादिभिस्त्व थ। पठश्चाज्याहुतीर्हुत्वा स्वाहाकारमृगन्ततः ॥ ११ ॥ सम ञ्जन्त्वनया प्राश्य दधि तस्यै प्रयच्छति। सापि प्राश्नाति तच्छू ष्णीमथ स्विष्टकृदादिकम् ॥१२॥ अथवानक्ति हृदये एतयर्चा ज्यशेषतः। बध्वा विवाहवेलायां यत्सा परिहिताम्बरम् ॥ १३॥ सत्येनोत्तभितासूक्तं वेत्ति य. पाठतोऽर्थतः। तस्मै विप्राय तद्द्याद्व्रतान्ते धौतमम्बरम् ॥ १४ ॥ ब्राह्मणान्भोजयित्वैतान्नो स्वस्तीत्यथ वाचयेत्। ॐ स्वस्तीति प्रतिब्रूयुर्ब्राह्मणास्ते च पू जिता. ॥ १५ ॥ स्वस्त्यादि वाचयित्वादौ स्त्रियं तामुपगच्छ ति। मुहूर्ते शोभने तस्या व्रीडा न स्याद्यथा तथा ॥ १६ ॥ ( ३३१ ) इति गृहप्रवेशः ॥

२४ उपासनहोमः ।

अथ यस्मिन्विवाहाग्निरुत्पन्नोऽहनि तस्य तु । यत्साय तत आरभ्य गृह्य परिचरेत्स्वयम् ॥ १ ॥ आत्मनोऽसभवे पत्नी पुत्रादय इति स्थितिः । अन्ये तु मन्यते पत्नीकुमार्योस्तद्धोम कम् ॥ २ ॥ तत्र नास्त्यत्र भगवद्वृत्तिकारवचो यथा । ज्वाल येपदराह्णेऽग्निमस्त यति दिवाकरे ॥ ३ ॥ पर्यूह्याग्नि परिस्तीर्य पर्युक्ष्य च ततः परम् । पयःप्रभृतिषु त्वेक सस्कुर्यादग्निहोत्र वत् ॥ ४ ॥ अलकरोति पुष्पाद्यैरनलायतन ततः । द्रव हविः स्रुवेणैव पाणिना कठिन हविः ॥ ५ ॥ जुहुयादग्नये स्वाहा सुसमिद्धे हुताशने । ध्यात्वा शब्द चतुर्थ्यन्त प्रजापतय इत्य थ ॥ ६ ॥ स्वाहाकारेण जुहुयात्तत परिसमूहनम् । पर्युक्षण च कुर्वीत प्रातरप्येवमिष्यते ॥ ७ ॥ व्युष्टायां ज्वलयेदेनं साय होम' कृतः पुरा । पयसान्येन वा प्रातस्तेनैवेत्याह वृत्ति कृत् ॥ ७॥ पूर्वमन्त्रस्तु सूर्याय स्वाहेत्यन्यत्सम भवेत् ॥ ८॥ ( ३३९ ) इत्युपासनहोमः ॥

२५ देवयज्ञः ।

गृहस्थो वैश्वदेवाख्य कर्म प्रारभते दिवा । तत्र नास्त्यत्र भगवद्वृत्तिकारवचो यथा ॥ १ ॥ औपासनाग्निमन्य वा समि ध्याथ हविर्भुजम् । पर्युह्य परिषिच्याग्निमलकृत्य च पूर्ववत् ॥ २ ॥ हविष्य पक्वमादध्यादधिश्रित्यानले च तत् । प्रोक्ष्यो द्वास्य घृताभ्यक्त हृदि सव्य निधाय च ॥ ३ ॥ हुत्वा हस्तेन सूर्यायेत्यादिभिर्दशभिस्तत' । प्रजापतिपदस्योक्तिर्वैश्वदेवेन तु स्मृतिः ॥ ४ ॥ पर्यूहनोक्षणे कुर्याद्देवयज्ञोऽयमीरितः ॥ ५ ॥ ( ३४४ ) इति देवयज्ञः ॥

२६ भूतयज्ञः ।

भूतयज्ञ प्रकुर्वीत अग्नेरुत्तरदेशतः । एतैश्चेवि बलीन्दत्वा प्राक्सस्थांश्च निरन्तरान्॥१॥ प्रक्त्वान्तराल प्राक्सस्थानद्य इ

त्यादिभिर्हरेत् । इहापि भवति स्वाहाकारो न पितृयज्ञके ॥२॥ अग्नौ हुताद्बलेः प्रत्यगिन्द्रायेति बलिं हरेत् । उदगैन्द्राद्बलेरिन्द्रपुरुषेभ्यो बलिं हरेत् ॥ ३ ॥ यमायेत्यन्तरालस्य हरेद्दक्षिणतो बलिम् । याम्यादुदक्च यमपुरुषेभ्यो बलिं हरेत् ॥ ४ ॥ प्राच्या ब्रह्मबलेर्हुत्वा वरुणायेति मन्त्रतः । अस्मादुदक्तु वरुणपुरुषेभ्यो बलिं हरेत् ॥ ५ ॥ सोमायेत्यन्तरालस्य हरेदुत्तरतो बलिम् । सौम्याद्बलेरुदक्सोमपुरुषेभ्यो बलिं हरेत् ॥६॥ जयन्तस्त्वाह वास्तवन्तैर्बलीन्हुत्वा निरन्तरान् । मुक्त्वान्तरालमिन्द्रादि दिग्देवाना बलीन्हरेत् ॥ ७ ॥ ऐन्द्रादिवत्स्थितः प्राच्याः प्राच्यां स्यात्पौरुषो बलिः । अन्तराले बलीन्हुत्वा शिष्टैर्मन्त्रैरतः परम् ॥ ८ ॥ रक्षोभ्य इति सर्वासां बलिमुत्तरतो हरेत् ॥ ९ ॥ ( ३५३ ) इति भूतयज्ञः ॥

२७ पितृयज्ञः ।

भूतयज्ञोऽयमुदितः प्राचीनावीत्यतः परम् । स्वधापितृभ्य इत्युक्त्वा दक्षिणस्यां तु निर्वपेत् ॥ १ ॥ पितृयज्ञोऽयमुदितो नक्तं चैतत्त्रय भवेत् । इति पितृयज्ञः । सूर्यायेति पदस्थाने ईरयेदग्नयेपदम् ॥ २ ॥ दिवाचारिभ्य इत्यत्र नक्तचारिभ्य इष्यते । कुर्वीत स्नातकश्चेद् पृथक्पाकी भवेद्यदि ॥ ३ ॥ एतान्पञ्चमहायज्ञान्कुर्यादहरहः शुचिः ॥ ४ ॥ ( ३५७ ) इति पञ्चयज्ञाः ॥

२८ ब्रह्मयज्ञः ।

ग्रामात्प्राच्यामुदीच्यां वा या वा दिक्स्यादनिन्दिता । आ पोऽवगाह्य तु स्नायादुपवीत्येव स द्विजः ॥ १ ॥ धौतशुक्लाम्बरः कुर्यात्कर्माङ्गाचमनं ततः । दर्भान्वहूञ्शुचौ देशे प्रागग्रांस्तां स्तृणात्यथ ॥ २ ॥ दर्भेषूपविशेत्कर्मण्यत्र प्राङ्मुख एव सन् । कृत्वोपस्थकरे सव्य उत्ताने प्राग्दिगङ्गुलौ ॥ ३ ॥ पवित्रे स्था

पयेदुक्ते प्रागग्रे दक्षिणेन तु । न्यञ्च प्रागङ्गुलि तेन सदध्याद् क्षिण करम् ॥४॥ ऊर्ध्वं तिर्यगधस्ताद्वा नेक्षेत यदि वाक्षिणी ॥ समील्य येन वात्मा तु समाहितमना भवेत् ॥ ५ ॥ सूक्ताद्य न्यतम पूर्वमभिसधाय शक्तितः । ॐपूर्वा व्याहृतीस्तिस्र' स मस्तास्तु सकृद्वदेत् ॥ ६ ॥ पच्छस्त्वर्धर्चशः सर्वा सावित्री त्रि र्वेदेदथ । पूर्वाभिसहित यावत्तदधीत्य समाहित ॥ ७ ॥ नमो ब्रह्मण इत्येता त्रिरुक्त्वा प्रणव वदेत् । प्रणवाद्येतदन्त स्या न्मध्यमेन स्वरेण तु ॥ ८ ॥ अधीते मनसा ग्रामे ब्रह्मयज्ञ करोति चेत् । अपां समीपमागत्य तर्पयेदथ देवताः ॥ ९ ॥ त्रिंशद्भिरेकेनोनैस्तु द्वादशश्च भवेत्तथा । त्रयोविशतिवाक्यैस्तु देवर्षीश्च पितॄन्क्रमात् ॥ १० ॥ एवमन्तानि तृप्यन्त्वित्यन्तैस्तु प्रतिमन्त्रकम् । सिश्चेत्प्रजापतिस्तृप्यत्वित्यपो देवतीर्थतः ॥११॥ यातुस्तृप्तिर्यथालिङ्ग मन्त्रान्तेषु प्रयुज्यते । मन्त्रै शतर्चिनस्तृप्य न्त्वित्यादिभिरत परम् ॥ १२ ॥ प्रतिमन्त्र निवीती तु तर्पये द्दपितीर्थतः । प्राचीनावीत्यथैदानीं पितृतीर्थेन तर्पयेत् ॥१३॥ सुमन्त्वित्यादिभिर्मन्त्रै' प्रतिमन्त्र च पूर्ववत् । द्वितीयान्तेषु म न्त्रेषु तर्पयामिपद वदेत् ॥ १४ ॥ अथ तु ब्रह्मयज्ञोऽस्य भि क्षादानादिदक्षिणा । कुर्यात्तिष्ठन्शयानो वा ब्रह्मयज्ञसम भ वेत् ॥ १५ ॥ देशोऽशुचि· स्वय वा स्यात्तदानध्याय इष्यते। प्रागूर्ध्वं वा भवेदेतद्वैश्वदेवाख्यकर्मणः ॥ १६ ॥ ( ३७३ ) इति ब्रह्मयज्ञः ॥

२९ मनुष्ययज्ञ ।

ऊर्ध्वमेव नृयज्ञः स्यात्स चेष्टोऽतिथिपूजनम् । एतान्पञ्चम हायज्ञान्कुर्यादहरह· शुचि' ॥ १ ॥ ( ३७४ ) इति मनुष्ययज्ञः॥

३० संध्योपासनम् ।

अन्यचाहरहःकृत्य सध्योपासनमुच्यते । ग्रामाद्बहिरपां ती र उपवीत्येव स द्विजः ॥ १ ॥ आचम्य मार्जनाद्यन्यत्स्मृत्यु

क्त च करोत्यथ । अर्धास्तमित आदित्ये पश्चिमस्य य उत्तर ॥ २ ॥ भागस्तन्मुख आसीन सावित्री वाग्यतो जपेत् । आ तारकोदयादेव प्रात कर्मेदमिष्यते ॥ ३ ॥ अर्धास्तमितनक्ष त्रमन्तरिक्ष यदा तत । आरभ्य प्राङ्मुखस्तिष्ठञ्जपेदासूर्यद र्शनात् ॥ ४ ॥ ( ३७८ ) इति सन्ध्योपासनम् ॥

३१ उपाकर्म ।

अध्यायानामुपाकर्म श्रावण्या श्रवणेन तु । तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते ॥ १ ॥ अन्द्वर्योपधयस्तस्मिन्मासे तु न भवन्ति चेत् । तदा भाद्रपदे मासि श्रवणेन करोति तत् ॥ २ ॥ कर्मद्वयमिद केचिल्लौकिकाग्नौ प्रकुर्वते । आज्य संस्कारपर्यन्तमुपलेपादि पूर्ववत् ॥ ३ ॥ आज्येन दधिसक्तूनां पर्यग्निकरण भवेत् । उत्पूतमात्रमाज्य चेत्तेषा त्रि प्रोक्षण भवेत् ॥ ४ ॥ इध्माभिघारणान्त स्यादाज्याद्युद्वासनादिकम् । अन्वारब्धोऽधुना शिष्यै॰ स्वयमेव न सन्ति चेत् ॥ ५ ॥ प्रकुर्वीताज्यभागान्तमिध्माधानादि पूर्ववत् । इहाज्यभागौ नित्यौ स्तस्तथैवोत्सर्जनेऽपि तौ ॥ ६ ॥ हुत्वाज्यं नवभिर्मन्त्रै सावित्र्याद्यैरत॰ परम् । अथावदानधर्मेण तान्सक्तून्दधिसयुतान ॥ ७ ॥ हुत्वाग्निमीळ इत्याद्यैर्मन्त्रैर्विंशतिभिः क्रमात् । शाकल्याना समानीव इत्यृचान्त्याहुतिर्भवेत् ॥ ८ ॥ बाष्कलानां तु तच्छंयोरित्यृचान्त्याहुतिर्भवेत् । अथ स्विष्टकृत हुत्वा दधिसक्तुभिरेव च ॥९॥ दधिसक्तून्स्वय शिष्या॰ प्राश्याचम्य तत॰ परम् । परिस्तरणदर्भैस्तैरन्तर्दधाति तेऽञ्जलीन् ॥ १० ॥ अन्येन सेचयित्वापस्ताभिः कुर्वन्ति मार्जनम् । पश्चादग्नेस्तु दर्भेषु प्रागग्रेषूपविश्य च ॥ ११ ॥ आसिच्याप शरावादौ दर्भा स्तत्र निधाय च । प्रागग्रदर्भगर्भास्ते कुर्युर्ब्रह्माञ्जलीनथ ॥१२॥

---

१ पर्यन्तमन्वाधानादि

सव्याहृति जपन्त्युच्चैः सावित्रीं ब्रह्मयज्ञवत् । त्रिरभ्यसेयुरों कार व्याहृतीश्चात्र कर्मणि ॥ १३ ॥ अग्निमीळे इद सूक्तमनुवाकमथापि वा । प्रारभेरस्त्वृच चापि अध्याप्यान्वाचयेद्गुरु ॥ १४ ॥ प्रायश्चित्तादि सकल होमशेष समापयेत् । अनध्याया न्स्मृतौ सिद्धान्परिहृत्य त्वधीयते ॥ १५ ॥ यस्त्वपूर्वमधीते ऽसौ प्रारभेत शुभेऽहनि । समावृत्तोऽप्यधीयानो मधुमासादि वर्जयेत् ॥ १६ ॥ ऋतुस्नातोपगमन समावृत्तस्य मन्वते । अत आरभ्य षण्मासान्नियमेन त्वधीयते ॥ १७ ॥ पश्चादङ्गानि षण्मासाञ्शिष्यमध्यापयेद्गुरु ॥ १८ ॥ ( ३९६ ) इत्युपाकर्म॥

३२ उत्सर्जनम् ।

अध्यायोत्सर्जन माघ्या पौर्णमास्या विधीयते । ग्रामाद्ब हिर्विविक्ते स्यादुपलेपादि पूर्ववत् ॥ १ ॥ गृहपक्व समीपेऽग्ने निधायाज्यमाधिश्रयेत् । सस्कार्य सक्तुवच्चान्न शान्तिकर्मणि चात्र तु ॥ २ ॥ तत्राज्याहुतिपर्यन्तमुपाकरणवद्भवेत् । जुहोति गृहसिद्धान्नमुपाकरणवत्ततः ॥ ३ ॥ अन्नेन स्विष्टकृद्धोमो न स्तः प्राशनमार्जने । वेदाद्यारम्भण कृत्वा कर्म शिष्ट समापयेत् ॥ ४ ॥ अथ तीरमपा गत्वा तेऽवगाह्य ततो जलम् । ऋषी न्दर्भमयान्कृत्वा पूजयेत्तर्पयेत्ततः ॥ ५ ॥ सावित्र्याद्या नवा द्याद्या देवतास्तर्पयन्त्यथ । सावित्री तर्पयाम्यग्नि तर्पयामीति तर्पयेत् ॥ ६ ॥ जयन्तस्त्वग्निमीळादिमन्त्रैस्तर्पणमब्रवीत् । ब्र ह्मयज्ञाङ्गमुक्त यत्तर्पण स्यादिहापि तत् ॥ ७ ॥ अत आरभ्य षण्मासान्षडङ्गानि त्वधीयते । शुक्ले वेदास्त्वधीयीरन्कृष्णेऽङ्गा नीति केचन । कर्मद्वयमिद केचिल्लौकिकाग्नौ प्रयुञ्जते ॥ ८ ॥ ( ४०४ ) इत्युत्सर्जनम् ॥

इत्याश्वलायनगृह्यकारिकासु भट्टकुमारिलस्वामिविरचितासु प्रथमोऽध्याय ॥ १ ॥

## द्वितीयोऽध्याय २

### १ श्रवणाकर्म।

ब्रुवेऽथ श्रवणाकर्म सर्पवल्याग्र्यकर्म च। कुर्वन्ति श्रावणे मासि पौर्णमास्यामिदं द्वयम् ॥ १ ॥ पूर्वेद्यहि कलश नव यावकसक्तुभि । निधाय त नवे शिक्ये दर्वी वैकङ्कतीमपि ॥ २ ॥ प्राच्या दिशि शुचि देश बल्यर्थ परिगृह्य च। यवधाना विभज्यैक भागमभ्यज्य सर्पिषा ॥ ३ ॥ आदित्येऽस्तमिते कुर्यादन्वाधानादि पूर्ववत्। हविर्द्वयस्य तूष्णींस्तौ निर्वापप्रोक्षणे इह ॥ ४ ॥ पुरोवदवघातादि स्याद्विभज्य च तण्डुलान्। त त्रेकेन पुरोडाशमन्येन श्रपयेच्चरुम् ॥ ५ ॥ एकस्मिस्तु पुरोडाश कपाले श्रपयेदिह । आज्येन सह धानानां पर्यग्निकरण भवेत् ॥ ६ ॥ आज्यस्य केवलोत्पूर्तो तासा त्रि प्रोक्षण भवेत्। चरुमासादयेत्पूर्व पुरोडाशमतः परम् ॥ ७ ॥ बर्हिष्याज्यान्तरे कृत्स्न पुरोडाश निमज्जयेत्। मकाशपृष्ठमथवा पुरोडाश निमज्जयेत् ॥ ८ ॥ अथ कृत्वाज्यभागान्तं चर्वाहुतिचतुष्टयम्। हुत्वा चतुष्टयेनाग्नेनयेति मत्यृच तत' ॥ ९ ॥ उपस्तीर्याथ स व्येन दक्षिणे प्रोक्षिते करे। सव्येनैककपाल तमोप्य कृत्स्नम खण्डितम् ॥ १० ॥ उपरिष्टात्तु सव्येन कुर्याद्विरभिघारणम्। अच्युतायेति मन्त्रेण दक्षिणेन जुहोत्यथ ॥ ११ ॥ यस्मिन्नाज्ये निमग्नोऽय स्रुवेणैव जुहोति तत्। उपर्येककपालस्य मानो अग्ने इति त्वृचा ॥ १२ ॥ अथोपस्तरणाद्यन्यः करोति गृहिणो ऽञ्जलौ। स तेन जुहुयादक्ता धाना शं नो भवन्त्विति ॥ १३ ॥ यास्तु धाना अनभ्यक्ता पुत्रादिभ्यो ददाति ता'। अथ स्विष्टकृत हुत्वा चरुधानैकदेशतः ॥ १४ ॥ परिषेचनपर्यन्तं होमशेषं समापयेत्। इत्युक्त श्रवणाकर्म सर्पवल्याख्यमुच्यते ॥ १५ ॥ (४१९) इति श्रवणाकर्म।

२ सर्पबलिः।

अथ मपूरयेदर्वी सक्तुभिः कलशस्थितैः। गृहात्प्रागुपनि
ष्क्रम्य शुचौ देशेऽह्नि कल्पिते॥ १॥ अप आसिच्य तानोप्य
सर्पदेवेति मन्त्रतः। नान्तराबलिमात्मानं व्यवेयादिह कश्चन
॥ २॥ व्यवायस्य निषेधोऽयमुक्त आपरिदानतः। ये सर्पा
इति मन्त्रेण नमस्कुर्यात्कृताञ्जलिः॥ ३॥ बलिं प्रदक्षिणं कृत्वा
पश्चादस्योपविश्य च। सर्पोऽसीत्यादिकं मन्त्रं ददाम्यन्तं सकृ
द्वदेत्॥ ४॥ ध्रुवाय तु ते परिददाम्येतमुक्त्वा निवेदयेत्। ज्ये
ष्ठानुक्रमतः पुत्रानमत्तदुहितृस्तथा॥ ५॥ ततः पत्नी ध्रुवाय तु त
इत्याद्यावर्ततेऽत्र तु। वाच्यं पुत्रादिनामात्र द्वितीयान्तमगुपदे
॥ ६॥ ध्रुवमात्मेति चात्मानं ततः परिददाति सः। अयः
कुर्वेति चेदाह गृहिणी नाम मा पदे॥ ७॥ सायं प्रातश्च मन्त्रे
ण तेनामत्यवरोहणात्। बलिमेव हरेन्नेह नमस्कारादिरिष्यते
॥ ८॥ सायं प्रातश्च यावन्तः कालाः स्युस्तद्दिनादधः। ता
वतो वा बलीस्तस्मिन्नेवाहनि हरेदथ॥ ९॥ (४२८) इति
सर्पबलिः॥

३ आश्वयुजीकर्म।

कुर्वीताश्वयुजीकर्म तदिदानीं मयोच्यते। स्यादाश्वयुजमा
सस्य पौर्णमास्यां तु कर्म तत्॥ १॥ निवेशनमलं कुर्यात्कु
ड्यानां लेपनं भवेत्। उपर्याच्छादनं चैषां समां भूमिं करोत्व
थ॥ २॥ सर्वे गृह्याविशेषेण स्नान्ति शुक्लाम्बरास्ततः। औ
पासने हुते प्रातरन्वाधानादि पूर्ववत्॥ ३॥ उक्त्वा पशुप
तीत्येतच्चतुर्थ्यन्तं ततः परम्। त्वा जुष्टं निर्वपामीति निर्वापे
प्रोक्षणे तथा॥ ४॥ प्रोक्षामीति विशेषस्तु प्रोक्षणेऽन्यत्समं
भवेत्। चरुश्रपणपर्यन्तमवघातादिपूर्ववत्॥ ५॥ कुर्यात्पृषा
तकं नाम हविरन्यत्तदुच्यते। पयस्याज्ये निषिक्ते तु तत्पयः
स्यात्पृषातकम्॥ ६॥ अस्यापि च सहाज्येन पर्यग्निकरणं भ

